यज्ञोऽपि तस्यै जनतायै कल्पते यत्रैवं विद्वान्यजमानो वशी यजते १३

अग्निर्वै देवानां होतासीत्तम्मृत्युर्बहिष्पवमानेऽसीदत्सोऽनुष्टुभाज्यम्प्रत्यपद्यत मृत्युमेव तत्पर्यक्रामत्तमाज्येऽसीदत्स प्रउगेण प्रत्यपद्यत मृत्युमेव तत्पर्यक्रामत्तम्माध्यंदिने पवमानेऽसीदत्सोऽनुष्टुभा मरुत्वतीयम्प्रत्यपद्यत मृत्युमेव तत्पर्यक्रामत्तम्माध्यंदिने बृहतीषु नाशक्नोत्सत्तुम्प्राणा वै बृहत्यः प्राणानेव तन्नाशक्नोद्व्यवैतुं तस्मान्माध्यंदिने होता बृहतीषु स्तोत्रियेणैव प्रतिपद्यते प्राणा वै बृहत्यः प्राणानेव तदभि प्रतिपद्यते तं तृतीयपवमानेऽसीदत्सोऽनुष्टुभा वैश्वदेवम्प्रत्यपद्यत मृत्युमेव तत्पर्यक्रामत्तं यज्ञायज्ञीयेऽसीदत्स वैश्वानरीयेणाग्निमारुतम्प्रत्यपद्यत मृत्युमेव तत्पर्यक्रामद्वज्रो वै वैश्वानरीयम्प्रतिष्ठा यज्ञायज्ञीयं वज्रेणैव तत्प्रतिष्ठाया मृत्युं नुदते स सर्वान्पाशान्सर्वान्स्थाणून्मृत्योरतिमुच्य स्वस्त्येवोदमुच्यत स्वस्त्येव होतोन्मुच्यते सर्वायुः सर्वायुत्वाय सर्वमायुरेति य एवं वेद १४

इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतोऽगछत्स परमामेव परावतमगछदनुष्टुब्वै परमा परावद्वाग्वा अनुष्टुप् स वाचम्प्रविश्याशयत्तं सर्वाणि भूतानि विभज्यान्वैछंस्तम्पूर्वेद्युः पितरोऽविन्दन्नुत्तरमहर्देवास्तस्मात्पूर्वेद्युः पितृभ्यः क्रियत उत्तरमहर्देवान्यजन्ते तेऽब्रुवन्नभिषुणवामैव तथा वाव न आशिष्ठमागमिष्यतीति तथेति तेऽभ्यषुणवंस्त आ त्वा रथां यथोतय इत्येवैनमावर्तयन्निदं वसो सुतमन्ध इत्येवैभ्यः सुतकीर्त्यामाविरभवदिन्द्र नेदीय एदिहीत्येवैनम्मध्यम्प्रापादयन्तागतेन्द्रेण यज्ञेन यजते सेन्द्रेण यज्ञेन राध्नोति य एवं वेद १५

इन्द्रं वै वृत्रं जघ्निवांसं नास्तृतेति मन्यमानाः सर्वा देवता अजहुस्तम्मरुत एव स्वापयो नाजहुः प्राणा वै मरुतः स्वापयः प्राणा हैवैनं तन्नाजहुस्तस्मादेषोऽच्युतः स्वापिमान्प्रगाथः शस्यत आ स्वापे स्वापिभिरित्यपि ह यद्यैन्द्रमेवात ऊर्ध्वं छन्दः शस्यते तद्ध सर्वम्मरुत्वतीयम्भवत्येष चेदच्युतः स्वापिमान्प्रगाथः शस्यत आ स्वापे स्वापिभिरिति १६

ब्राह्मणस्पत्यम्प्रगाथं शंसति बृहस्पतिपुरोहिता वै देवा अजयन्स्वर्गं लोकं

व्यस्मिँल्लोकेऽजयन्त तथैवैतद्यजमानो बृहस्पतिपुरोहित एव जयति स्वर्गं लोकं व्यस्मिँल्लोके जयते तौ वा एतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते तदाहुर्यन्न किं चनास्तुतं सत्पुनरादायं शस्यतेऽथ कस्मादेतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते इति पवमानोक्थं वा एतद्यन्मरुत्वतीयं षट्सु वा अत्र गायत्रीषु स्तुवते षट्सु बृबतीषु तिसृषु त्रिष्टुप्सु स वा एष त्रिछन्दाः पञ्चदशो माध्यंदिनः पवमानस्तदाहुः कथं त एष त्रिछन्दाः पञ्चदशो माध्यंदिनः पवमानोऽनुशास्तो भवतीति ये एव गायत्र्या उत्तरे प्रतिपदो यो गाय-त्रोऽनुचरस्ताभिरेवास्य गायत्र्योऽनुशस्ता भवन्त्येताभ्यामेवास्य प्रगाथाभ्या-म्बृहत्योऽनुशस्ता भवन्ति तासु वा एतासु बृहतीषु सामगा रौरवयौ-धाजयाभ्याम्पुनरादायं स्तुवते तस्मादेतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते तच्छस्त्रेण स्तोत्रमन्वैति ये एव त्रिष्टुभौ धाय्ये यत्त्रैष्टुभं निवि-द्धानम्ताभिरेवास्य त्रिष्टुभोऽनुशस्ता भवन्त्येवमु हास्यैष त्रिछन्दाः पञ्चदशो माध्यंदिनः पवमानोऽनुशस्तो भावति य एवं वेद १७

धाय्याः शंसति धाय्याभिर्वै प्रजापतिरिमाँल्लोकानधयद्यं-यं काममकामयत तथैवैतद्यजमानो धाय्याभिरेवेमाँल्लोकान्धयति यं-यं कामां कामयते य एवं वेद यदेव धाय्याः यत्रयत्र वै देवा यज्ञस्य छिद्रं निरजानंस्तद्धाय्याभिर-पिदधुस्तद्धाय्यानां धाय्यात्वमछिद्रेण हास्य यज्ञेनेष्टम्भवति य एवं वेद यद्वेव धाय्याः स्यूम हैतद्यज्ञस्य यद्धाय्यास्तद्यथा सूच्या वासः संदधदियादे-वमेवैताभिर्यज्ञस्य छिद्रं संदधदेति य एवं वेद यद्वेव धाय्याः तान्यु वा एतान्युपसदामेवोक्थानि यद्धाय्या अग्निर्नेतेत्याग्नेयी प्रथमोपसत्तस्या एतदुक्थं त्वं सोम क्रतुभिरिति सौम्या द्वितीयोपसत्तस्या एतदुक्थम्पिन्वन्त्यप इति वैष्णवी तृतीयोपसत्तस्या एतदुक्थं यावन्तं ह वै सौम्येनाध्वरेणेष्ट्वा लोकं जयति तमत एकैकयोपसदा जयति य एवं वेद यश्चैवं विद्वान्धाय्याः शंसति तद्धैक आहुस्तान्वो मह इति शंसेदेतां वाव वयम्भरतेषु शस्यमानामभिव्यजानीम इति वदन्तस्तत्तन्नादृत्यं यदेतां शंसेदीश्वरः पर्जन्योऽवर्ष्टोः पिन्वन्त्यप इत्येव शंसेद्वृष्टिवनि पदम्मरुत इति मारुतमत्यं न मिहे वि नयन्तीति विनी-तवद्यद्विनीतवत्तद्विक्रान्तवद्यद्विक्रान्तवत्तद्वैष्णवं वाजिनमितीन्द्रो वै वाजी तस्यां वा एतस्यां चत्वारि पदानि वृष्टिवनि मारुतं वैष्णवमैन्द्रं सा वा एषा तृतीयसवनभाजना सती मध्यंदिने शस्यते तस्माद्धेदम्भरतानाम्पशवः

सायंगोष्ठाः सन्तो मध्यंदिने संगविनीमायन्ति सो जगती जागता हि पशव आत्मा यजमानस्य मध्यंदिनस्तद्यजमाने पशून्दधाति १८

मरुत्वतीयम्प्रगाथं शन्सति पसवो वै मरुतः पशवः प्रगाथः पशूनामवरुद्ध्यै जनिष्ठा उग्रः सहसे तुरायेति सूक्तम्शंसति तद्वा एतद्यजमानजननमेव सूक्तं यजमानं ह वा एतेन यज्ञाद्देवयोन्यै प्रजनयति तत्संजयम्भवति सं च जयति वि च जयत एतद्गौरिवीतं गौरिवीतिर्ह वै शाक्त्यो नेदिष्ठं स्वर्गस्य लोकस्यागछत्स एतत्सूक्तमपश्यत्तेन स्वर्गं लोकमजयत्तथैवैतद्यजमान एतेन सूक्तेन स्वर्गं लोकं जयति तस्यार्धाः शस्त्वार्धाः परिशिष्य मध्ये निविदं दधाति स्वर्गस्य हैष लोकस्य रोहो यन्निवित्स्वर्गस्य हैतल्लोकस्याक्रमणं यन्निवित्तामाक्रममाण इव शंसेदुपैव यजमानं निगृह्णीत योऽस्य प्रियः स्यादिति नु स्वर्गकामस्याथाभिचरतो यः कामयेत क्षत्रेण विशं हन्यामिति त्रिस्तर्हि निविदा सूक्तं विशंसेत्क्षत्रं वै निविद्विट्सूक्तं क्षत्रेणैव तद्विशं हन्ति यः कामयेत विशा क्षत्रं हन्यामिति त्रिस्तर्हि सूक्तेन निविदं विशंसेत्क्षत्रं वै निविद्विट्सूक्तां विशैव तत्क्षत्रं हन्ति य उ कामयेतोभयत एनं विशः पर्यवछिनदानीत्युभयतस्तर्हि निविदं व्याह्वयीतोभयत एवैनं तद्विशः पर्यवछिनत्तीति न्वभिचरत इतरथा त्वेव स्वर्गकामस्य वयः सिन्पर्णा उप सेदुरिन्द्रमित्युत्तमया परिदधाति प्रियमेधा ऋषयो नाधमानाः अप ध्वान्तमूर्णुहीति येन तमसा प्रावृतो मन्येत तन्मनसा गछेदप हैवास्मात्तल्लुप्यते पूर्धि चक्षुरिति चक्षुषी मरीमृज्येताजरसं ह चक्षुष्मान्भवति य एवं वेद मुमुग्ध्यस्मान्निधयेव बद्धानिति पाशा वै निधा मुमुग्ध्यस्मान्पाशादिव बद्धानित्येव तदाह १९

इन्द्रो वै वृत्रं हनिष्यन्सर्वा देवता अब्रवीदनु मोपतिष्ठध्वमुप मा ह्वयध्वमिति तथेति तं हनिष्यन्त आद्रवन्सोऽवेन्मां वै हनिष्यन्त आद्रवन्ति हन्तेमान्भीषया इति तानभि प्राश्वसीत्तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन्मरुतो हैनं नाजहुः प्रहर भगवो जहि वीरयस्वेत्येवैनमेतां वाचं वदन्त उपातिष्ठन्त तदेतदृषिः पश्यन्नभ्यनूवाच वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा आजहुर्ये सखायः मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासीति सोऽवेदिमे वै किल मे सचिवा इमे माकामयन्त हन्तेमानस्मिन्नुक्थ आभजा इति तानेतस्मिन्नुक्थ आभजदथ हैते तर्ह्युभे एव निष्केवल्ये उक्थे आसतुर्मरुत्वतीयं ग्रहं गृह्णाति

मरुत्वतीयम्प्रगाथं शंसति मरुत्वतीयं सूक्तं शंसति मरुत्वतीयाम्निविदं दधाति मरुतां सा भक्तिर्मरुत्वतीयमुक्थं शस्त्वा मरुत्वतीयया यजति यथाभागं तद्देवताः प्रीणाति ये त्वाहिहत्ये मघवन्नवर्धन्ये शाम्बरे हरिवो ये गविष्टौ ये त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमं सगणो मरुद्भिरिति यत्रयत्रैवैभिर्व्यजयत यत्रयत्र वीर्यमकरोत्तदेवैतत्समनुवेद्येन्द्रेणैनान्ससोमपीथान्करोति २०

इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत्प्रजापतिमहमेतदसानि यत्त्व-महम्महानसानीति स प्रजापतिरब्रवीदथ कोऽहमिति यदेवैतदवोच इत्य-ब्रवीत्ततो वै को नाम प्रजापतिरभवत्को वै नाम प्रजापतिर्यन्महा-निन्द्रोऽभवत्तन्महेन्द्रस्य महेन्द्रत्वं स महान्भूत्वा देवता अब्रवीदुद्धारम्म उद्धरतेति यथाप्येतर्हीछति यो वै भवति यः श्रेष्ठतामश्नुते स महान्भवति तं देवा अब्रुवन् स्वयमेव ब्रूष्व यत्ते भविष्यतीति स एतम्माहेन्द्रं ग्रहमब्रूत माध्यंदिनं सवनानां निष्केवल्यमुक्थानां त्रिष्टुभं छन्दसाम्पृष्ठं साम्नां तमस्मा उद्धारमुदहरनु उदस्मा उद्धारं हरन्ति य एवं वेद तां देवा अब्रुवन्सर्वं वा अवोचथा अपि नोऽत्रास्त्विवति स नेत्यब्रवीत्कथं वोऽपिस्यादिति तमब्रुवन्न् अप्येव नोऽस्तु मघवन्निति तानीक्षतैव २१

ते देवा अब्रुवन्नियं वा इन्द्रस्य प्रिया जावा वावाता प्रासहा नामास्यामेवेछामहा इति तथेति तस्यामैछन्त सैनानब्रवीत्प्रातर्वः प्रतिवक्तास्मीति तस्मात्स्त्रियः पत्याविछन्ते तस्मादु स्त्र्यनुरात्रम्पत्याविछते ताम्प्रातरुपायन्सैतदेव प्रत्यपद्यत यद्वावान पुरुतमम्पुराषाळा वृत्रहेन्द्रो नामान्यप्राः अचेति प्रासहस्पति-स्तुविष्मानितीन्द्रो वै प्रासहस्पतिस्तुविष्मान्यदीमुश्मासि कर्तवे करत्तदिति यदेवैतदवोचामाकरत्तदित्येवैनांस्तदब्रवीत्ते देवा अब्रुवन्नप्यस्या इहास्तु या नोऽस्मिन्न वै कमविददिति तथेति तस्या अप्यत्राकुर्वंस्तस्मादेषात्रापि शस्यते यद्वावान पुरुतमम्पुराषाळ् इति सेना वा इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम को नाम प्रजापतिः श्वशुरस्तद्यास्य कामे सेना जयेत्तस्या अर्धात्ति-ष्ठंस्तृणमुभयतः परिछिद्येतरां सेनामभ्यस्येत्प्रासहे कस्त्वा पश्यतीति तद्य-थैवादः स्नुषा श्वशुराळ् लज्जमाना निलीयमानैत्येवमेव सा सेना भज्यमाना निलीयमानैति यत्रैवं विद्वांस्तृणमुभयतः परिछिद्येतरां सेनं अभ्यस्यति प्रासहे कस्त्वा पश्यतीति तानिन्द्र उवाचापि वोऽत्रास्त्विवति ते देवा अब्रुव-

न्विराड्याज्यास्तु निष्केवल्यस्य या त्रयस्त्रिंशदक्षरा त्रयस्त्रिंशद्वै देवा अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च देवता अक्षरभाजः करोत्यक्षरम्-अक्षरमेव तद्देवता अनुप्रपिबन्ति देवपात्रेणैव तद्देवतास्तृप्यन्ति यं कामयेतानायतनवान्स्यादित्यविराजास्य यजेद्गायत्र्या वा तृष्टुभा वान्येन वा छन्दसा वषट्कुर्यादनायतनवन्तमेवैनं तत्करोति यं कामयेतायतनवान्स्यादिति विराजास्य यजेत्पिबा सोममिन्द्र मन्दतु त्वेत्येतयायतनवन्तमेवैनं तत्करोति २२

ऋक्च वा इदमग्रे साम चास्तां सैव नाम ऋगासीदमो नाम साम सा वा ऋक्सामोपावदन् मिथुनं संभवाव प्रजात्या इति नेत्यब्रवीत्साम ज्यायान्वा अतो मम महिमेति ते द्वे भूत्वोपावदतां ते न प्रति चन समवदत तास्तिस्रो भूत्वोपावदंस्तत्तिसृभिः समभवद्यत्तिसृभिः समभवत्तस्मात्तिसृभिः स्तुवन्ति तिसृभिरुद्गायन्ति तिसृभिर्हि साम सम्मितं तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः पतयो यद्वै तत्सा चामश्च समभवतां तत्सामाभवत्तत्साम्नः सामत्वं सामन्भवति य एवं वेद यो वै भवति यः श्रेष्ठतामश्नुते स सामन्भवत्यसामन्य इति हि निन्दन्ति ते वै पञ्चान्यद्भूत्वा पञ्चान्यद्भू-त्वाकल्पेतामाहावाश्च हिंकारश्च प्रस्तावश्च प्रथमा च ऋगुद्गीथश्च मध्यमा च प्रतिहारश्चोत्तमा च निधनं च वषट्कारश्च ते यत्पञ्चान्यद्भूत्वा पञ्चान्य-द्भूत्वाकल्पेतां तस्मादाहुः पाङ्क्तो यज्ञः पाङ्क्ताः पशव इति यदु विराजं दशि-नीमभिसमपद्येतां तस्मादाहुर्विराजि यज्ञो दशिन्याम्प्रतिष्ठित इत्यात्मा वै स्तो-त्रियः प्रजानुरूपः पत्नी धाय्या पशवः प्रगाथो गृहाः सूक्तं स वा अस्मिंश्च लोकेऽमुष्मिंश्च प्रजया च पशुभिश्च गृहेषु वसति य एवं वेद २३

स्तोत्रियं शंसत्यात्मा वै स्तोत्रियस्तम्मध्यमया वाचा शंसत्यात्मानमेव तत्सं-स्कुरुतेऽनुरूपं शंसति प्रजा वा अनुरूपः स उच्चैस्तरामिवानुरूपः शंस्तव्यः प्रजामेव तच्छ्रेयसीमात्मनः कुरुते धाय्यां शंसति पत्नी वै धाय्या सा नीचैस्तरामिव धाय्या शंस्तव्या प्रतिवादिनी हास्य गृहेषु पत्नी भवति यत्रैवं विद्वान्नीचैस्तरां धाय्यां शंसति प्रगाथं शंसति स स्वरवत्या वाचा शंस्तव्यः पशवो वै स्वरः पशवः प्रगाथः पशूनामवरुद्ध्या इन्द्रस्य नु वीर्याणी प्र वोचमिति सूक्तां शंसति तद्वा एतत्प्रियमिन्द्रस्य सूक्तं निष्केवल्यं हैरण्य-

स्तूपमेतेन वै सूक्तेन हिरण्यस्तूप आङ्गिरस इन्द्रस्य प्रियं धामोपागछत्स परमं लोकमजयदुपेन्द्रस्य प्रियं धाम गछति जयति परमं लोकं य एवं वेद गृहा वै प्रतिष्ठा सूक्तं तत्प्रतिष्ठिततमया वाचा शंस्तव्यं तस्माद्यद्यपि दूर इव पशूँल्लभते गृहानेवैनानाजिगमिषति गृहा हि पशूनाम्प्रतिष्ठा प्रतिष्ठा २४ २

अध्याय १३ खण्डः १-१४

सोमो वै राजामुष्मिँल्लोक आसीत्तं देवाश्च ऋषयश्चाभ्याध्यायन्कथम-यमस्मान्सोमो राजागछेदिति तेऽब्रुवंश्छन्दांसि यूयं न इमं सोमं राजानमा-हरतेति तथेति ते सुपर्णा भूत्वोदपतंस्ते यत्सुपर्णा भूत्वोदपतंस्तदेतत्सौ-पर्णमित्याख्यानविद आचक्षते छन्दांसि वै तत्सोमं राजानमछाचरंस्तानि ह तर्हि चतुरक्षराणिचतुरक्षराण्येव छन्दांस्यासन्सा जगती चतुरक्षरा प्रथमो-दपतत्सा पतित्वार्धमध्वनो गत्वाश्राम्यत्सा परास्य त्रीण्यक्षराण्येकाक्षरा भूत्वा दीक्षां च तपश्च हरन्ती पुनरभ्यवापतत्तस्मात्तस्य वित्ता दीक्षा वित्तं तपो यस्य पशवः सन्ति जागता हि पशवो जगती हि तानाहरदथ त्रिष्टुबुदपतत्सा पतित्वा भूयोऽर्धादध्वनो गत्वाश्राम्यत्सा परास्यैकमक्षरं त्र्यक्षरा भूत्वा दक्षिना हरन्ती पुनरभ्यवापतत्तस्मान्मध्यंदिने दक्षिणा नीयन्ते त्रिष्टुभो लोके त्रिष्टुब्भि ता आहरत् २५

ते देवा अब्रुवन्गायत्रीं त्वं न इमं सोमं राजानमाहरेति सा तथेत्यब्रवीत्तां वै मा सर्वेण स्वस्त्ययनेनानुमन्त्रयध्वमिति तथेति सोदपतत्तां देवाः सर्वेण स्वस्त्ययनेनान्वमन्त्रयन्त प्रेति चेति चेत्येतद्वै सर्वं स्वस्त्ययनं यत्प्रेति चेति चेति तद्योऽस्य प्रियः स्यात्तमेतेनानुमन्त्रयेत प्रेति चेति चेति स्वस्त्येव गछति स्वस्ति पुनरागछति सा पतित्वा सोमपालान्भीषयित्वा पद्भ्यां च मुखेन च सोमं राजानं समगृभ्णाद्यानि चेतरे छन्दसी अक्षराण्यजहितां तानि चोपस-मगृभ्णात्तस्या अनुविसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमछि-दत्तच्छल्यकोऽभवत्तस्मात्स नखमिव यद्वशमस्त्रवत्सा वशाभवत्तस्मात्सा हविरिवाथ यः शल्यो यदनीकमासित्स सर्पो निर्दंश्यभवत्सहसः स्वाजो यानि पर्णानि ते मन्थावला यानि स्नावानि ते गण्डूपदा यत्तेजनं सोऽन्धाहिः सो सा तथेषुरभवत् २६

सा यद्दक्षिणेन पदा समगृभ्णात्तत्प्रातःसवनमभवत्तद्गायत्री स्वमायतनमकुरुत तस्मात्तत्समृद्धतमम्मन्यन्ते सर्वेषां सवनानामग्रियो मुख्यो भवति श्रेष्ठतामश्नुते य एवं वेदाथ यत्सव्येन पदा समगृभ्णात्तन्माध्यंदिनं सवनमभवत्तद्विस्रंसत तद्विस्रस्तं नान्वाप्नोत्पूर्वं सवनं ते देवाः प्राजिज्ञासन्त तस्मिंस्त्रिष्टुभां छन्दसा-मदधुरिन्द्रं देवतानां तेन तत्समावद्वीर्यमभवत्पूर्वेण सवनेनोभाभ्यां सवनाभ्यां समावद्वीर्याभ्यां समावज्जामीभ्यं राध्नोति य एवं वेदाथ यन्मुखेन सम-गृभ्णात्तत्तृतीयसवनमभवत्तस्य पतन्ती रसमधयत्तद्धीतरसं नान्वाप्नोत्पूर्वे सवने ते देवाः प्राजिज्ञासन्त तत्पशुष्वपश्यंस्तद्यदाशिरमवनयन्त्याज्येन पशुना चरन्ति तेन तत्समावद्वीर्यमभवत्पूर्वाभ्यां सवनाभ्यां सर्वैः सवनैः समावद्वीर्यैः समावज्जामिभी राध्नोति य एवं वेद २७

ते वा इमे इतरे छन्दसी गायत्रीमभ्यवदेतां वित्तं नावक्षराण्यनुपर्यागुरिति नेत्यब्रवीद्गायत्री यथावित्तमेव न इति ते देवेषु प्रश्नमैतां ते देवा अब्रुवन् यथावित्तमेव व इति तस्माद्धाप्येतर्हि वित्त्यां व्याहुर्यथावित्तमेव न इति ततो वा अष्टाक्षरा गायत्र्यभवत्त्र्यक्षरा त्रिष्टुबेकाक्षरा जगती साष्टाक्षरा गायत्री प्रातःसवनमुदयछन्नाशक्नोत्त्रिष्टुप्त्र्यक्षरा माध्यंदिनं सवनमुद्यन्तुं तां गाय-त्र्यह्ववीदायान्यपि मेऽत्रास्त्विति सा तथेत्यब्रवीत्त्रिष्टुप् तां वै मैतैरष्टाभि-रक्षरैरुपसंधेहीति तथेति तामुपसमदधादेतद्वै तद्गायत्र्यै मध्यंदिने यन्मरुत्वती-यस्योत्तरे प्रतिपदो यश्चानुचरः सैकादशाक्षरा भूत्वा माध्यंदिनं सवनमुदय-छन्नाशक्नोज्जगत्येकाक्षरा तृतियसवनमुद्यन्तुं तां गायत्र्यब्रवीदायान्यपि मेऽत्रा-स्त्विति सा तथेत्यब्रवीज्जगति तां वै मैतैरेकादशभिरक्षरैरुपसंधेहीति तथेति तामुपसमदधादेतद्वै तद्गायत्र्यै तृतीयसवने यद्वैश्वदेवस्योत्तरे प्रतिपदो यश्चानुचरः सा द्वादशाक्षरा भूत्वा तृतीयसवनमुदयछत्ततो वा अष्टाक्षरा गायत्र्य-भवदेकादशाक्षरा त्रिष्टुब्द्वादशाक्षरा जगती सर्वैश्छन्दोभिः समावद्वीर्यैः समावज्जामिभी राध्नोति य एवं वेदैकं वै सत्तत्त्रेधाभवत्तस्मादाहुर्दातव्यमेवं विदुष इत्येकं हि सत्तत्त्रेधाभवत् २८

ते देवा अब्रुवन्नादित्यान्युष्माभिरिदं सवनमुद्यछामेति तथेति तस्मादा-दित्यारम्भणं तृतीयसवनमादित्यग्रहः पुरस्तात्तस्य यजत्य् आदित्यासो अदि-तिर्मादयन्तामिति मद्वत्या रूपसमृद्धया मद्वद्वै तृतीयसवनस्य रूपं नानु-

वषट्करोति न भक्षयति संस्था वा एषा यदनुवषट्कारः संस्था भक्षः प्राणा आदित्या नेत्प्राणान्संस्थापयानीति त आदित्या अब्रुवन्सवितारं त्वयेदं सह सवनमुद्यच्छामेति तथेति तस्मात्सावित्री प्रतिपद्भवति वैश्वदेवस्य सावित्रग्रहः पुरस्तात्तस्य यजति दमूना देवः सविता वरेण्य इति मद्वत्या रूपसमृद्धया मद्वद्वै तृतीयसवनस्य रूपं नानुवषट्करोति न भक्षयति संस्था वा एषा यदनुवषट्कारः संस्था भक्षः प्राणः सविता नेत्प्राणं संस्थापयानीत्युभे वा एष एते सवने विपिबति यत्सविता प्रातःसवनं च तृतीयसवनं च तद्य-त्पिबवत्सावित्र्यै निविदः पदम्पुरस्ताद्भवति मद्वदुपरिष्टादुभयोरेवैनं तत्सव-नयोराभजति प्रातःसवने च तृतीयसवने च बह्व्यः प्रातर्वायव्याः शस्यन्त एका तृतीयसवने तस्मादूर्ध्वाः पुरुषस्य भूयांसः प्राणा यच्चावाञ्चो द्यावापृथिवीयं शंसति द्यावापृथिवी वै प्रतिष्ठे इयमेवेह प्रतिष्ठासावमुत्र तद्यद्द्यावापृथिवीयं शंसति प्रतिष्ठयोरेवैनं तत्प्रतिष्ठापयति २९

आर्भवं शंसत्यृभवो वै देवेषु तपसा सोमपीथमभ्यजयंस्तेभ्यः प्रातःसवने-ऽवाचिकल्पयिषंस्तानग्निर्वसुभिः प्रातःसवनादनुदत तेभ्यो माध्यंदिने सवने-ऽवाचिकल्पयिषंस्तानिन्द्रो रुद्रैर्माध्यंदिनात्सवनादनुदत तेभ्यस्तृतीयसवने-ऽवाचिकल्पयिषंस्तान्विश्वे देवा अनोनुद्यन्त नेह पास्यन्ति नेहेति स प्रजा-पतिरब्रवीत्सवितारं तव वा इमेऽन्तेवासास्त्वमेवैभिः सम्पिबस्वेति स तथेत्य-ब्रवीत्सविता तान्वै त्वमुभयतः परिपिबेति तान्प्रजापतिरुभयतः पर्यपिबत्ते एते धाय्ये अनिरुक्ते प्राजापत्ये शस्येते अभित आर्भवं सुरुपकृत्नुमूतयेऽयं वेन-श्चोदयत्पृश्निगर्भा इति प्रजापतिरेवैनांस्तदुभयतः परिपिबति तस्मादु श्रेष्ठी पात्रे रोचयत्येव यं कामयते तं तेभ्यो वै देवा अपैवाबीभत्सन्त मनुष्यगन्धात्त एते धाय्ये अन्तरदधत येभ्यो मातै वा पित्र इति ३०

वैश्वदेवं शंसति यथा वै प्राज एवं वैश्वदेवं तद्यथान्तरं जनता एवं सूक्तानि यथारण्यान्येवं धाय्यास्तदुभयतो धाय्याम्पर्याह्वयते तस्मात्तान्यरण्यानि सन्त्य-नरण्यानि मृगैश्च वयोभिश्चेति ह स्माह यथा वै पुरुष एवं वैश्वदेवं तस्य यथावन्तरमङ्गान्येवं सूक्तानि यथा पर्वाण्येवं धाय्यास्तदुभयतो धाय्या-म्पर्याह्वयते तस्मात्पुरुषस्य पर्वाणि शिथिराणि सन्ति दृळ्हानि ब्रह्मणा हि तानि धृतानि मूलं वा एतद्यज्ञस्य यद्धाय्याश्च याज्याश्च तद्यदन्यान्या धाय्याश्च याज्याश्च

कुर्युरुन्मूलमेव तद्यज्ञं कुर्युस्तस्मात्ताः समान्य एव स्युः पाञ्चजन्यं वा एतदुक्थं यद्वैश्वदेवं सर्वेषां वा एतत्पञ्चजनानामुक्थम्देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां चैतेषां वा एतत्पञ्चजनानामुक्थं सर्व एनम्पञ्चजना विदुरैनम्पञ्चिन्यै जनतायै हविनो गछन्ति य एवं वेद सर्वदेवत्यो वा एष होता यो वैश्वदेवं शंसति सर्वा दिशो ध्यायेच्छंसिष्यन्सर्वास्वेव तद्दिक्षु रसं दधाति यस्यामस्य दिशि द्वेष्यः स्यान्न तां ध्यायेदनुहायैवास्य तद्वीर्यमाद-त्तेऽदितिर्द्यौरदितिरन्तरिक्षमित्युत्तमया परिदधातीयं वा अदितिरियं द्यौरियं अन्तरिक्षमदितिर्माता स पिता स पुत्र इतीयं वै मातेयम्पितेयम्पुत्रो विश्वे देवा अदितिः पञ्च जना इत्यस्यां वै विश्वे देवा अस्याम्पञ्चजना अदितिर्जात-मदितिर्जनित्वमितीयं वै जातमियं जनित्वं द्विः पच्छः परिदधाति चतुष्पादा वै पशवः पशूनामवरुद्ध्यै सकृदर्धर्चशः प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति सदैव पञ्चजनीयया परिदध्यात्तदुपस्पृसन्भूमिम्परिदध्यत्तद्यस्यामेव यज्ञं सम्भरति तस्यामेवैनं तदन्ततः प्रतिष्ठापयति विश्वे देवाः शृणुतेमं हवम्म इति वैश्वदेवमुक्थं शस्त्वा वैश्वदेव्या यजति यथाभागं तद्देवताः प्रीणाति ३१

आग्नेयी प्रथमा घृतयाज्या सौमी सौम्ययाज्या वैष्णवी घृतयाज्या त्वं सोम पितृभिः संविदान इति सौम्यस्य पितृमत्या यजति घ्नौति वा एतत्सोमं यदभिषुण्वन्ति तस्यैतामनुस्तरणीं कुर्वन्ति यत्सौम्यः पितृभ्यो वा अनुस्तरणी तस्मात्सौम्यस्य पितृमत्या यजत्यवधिषुर्वा एतत्सोमं यदभ्यसुषवुस्तदेनम्पुनः सम्भावयन्ति पुनराप्याययन्त्युपसदां रूपेणोपसदां किल वै तद्रूपं यदेता देवता अग्निः सोमो विष्णुरिति प्रतिगृह्य सौम्यं होता पूर्वश्छन्दोगेभ्योऽवेक्षेत तं हैके पूर्वं छन्दोगेभ्यो हरन्ति तत्तथा न कुर्याद्वषट्कर्ता प्रथमः सर्वभक्षान्भक्षयतीति ह स्माह तेनैव रूपेण तस्माद्वषट्कर्तैव पूर्वोऽवेक्षेताथैनं छन्दोगेभ्यो हरन्ति ३२

प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये तामृश्यो भूत्वा रोहितम्भूतामभ्यैत्तं देवा अपश्यन्न् आकृतं वै प्रजापतिः करोतीति ते तमैछन्य एनमारिष्यत्येतमन्योन्यस्मिन्नाविन्दंस्तेषां या एव घोरतमास्तन्व आसंस्ता एकधा समभरंस्ताः सम्भृता एष देवोऽभवत्तदस्यैतद्भूतवन्नाम भवति वै स योऽस्यैतदेवं नाम वेद तं देवा अब्रूवन्नयं वै प्रजापतिरकृतमकरिमं

विध्येति स तथेत्यब्रवीत्स वै वो वरं वृणा इति वृणीष्वेति स एतमेव वरमवृणीत पशूनामाधिपत्यं तदस्यैतत्पशुमन्नाम पशुमान्भवति योऽस्यैतदेवं नाम वेद तमभ्यायत्याविध्यत्स विद्ध ऊर्ध्व उदप्रवत तमेतम्मृग इत्याचक्षते य उ एव मृगव्याधः स उ एव स या रोहित्सा रोहिणी यो एवेषुस्त्रिकाण्डा सो एवेषुस्त्रिकाण्डा तद्वा इदम्प्रजापते रेतः सिक्तमधावत्तत्सरोऽभवत्ते देवा अब्रुवन् मेदम्प्रजापते रेतो दुषदिति यदब्रुवन् मेदम्प्रजापते रेतो दुषदिति तन्मादुषमभवत्तन्मादुषस्य मादुषत्वम्मादुषं ह वै नामैतद्यन्मानुषं तन्मादुषं सन्मानुषमित्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः ३३

तदग्निना पर्यादधुस्तन्मरुतोऽधून्वंस्तदग्निर्न प्राच्यावयत्तदग्निना वैश्वानरेण पर्यादधुस्तन्मरुतोऽधून्वंस्तदग्निर्वैश्वानरः प्राच्यावयत्तस्य यद्रेतसः प्रथम-मुददीप्यत तदसावादित्योऽभवद्यद्द्वितीयमासीत्तद्भृगुरभवत्तं वरुणो न्यगृह्णीत तस्मात्स भृगुर्वारुणिरथ यत्तृतीयमदीदेदिव त आदित्या अभवन्येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्यदङ्गाराः पुनरवशान्ता उददीप्यन्त तद्बृहस्पतिरभव-द्यानि परिक्षाणान्यासंस्ते कृष्णा पसवोऽभवन्या लोहिनी मृत्तिका ते रोहिता अथ यद्भस्मासीत्तत्परुष्यं व्यसर्पद्गौरो गवय ऋश्य उष्ट्रो गर्दभ इति ये चैतेऽरुणाः पशवस्ते च तान्वा एष देवोऽभ्यवदत मम वा इदम्मम वै वास्तुहमिति तमेतयर्चा निरवादयन्त यैषा रौद्री शस्यत आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः त्वं नो वीरो अर्वति क्षमेथा इति ब्रूयान्नाभि न इत्यनभिमानुको हैष देवः प्रजा भवति प्र जायेमहि रुद्रिय प्रजाभिरिति ब्रूयान्न रुद्रेत्येतस्यैव नाम्नः परिहृत्यै तदु खलु शं नः करतीत्येव शंसेच् छमिति प्रतिपद्यते सर्वस्मा एव शान्त्यै नृभ्यो नारिभ्यो गव इति पुमांसो वै नरः स्त्रियो नार्यः सर्वस्मा एव शान्त्यै सोऽनिरुक्ता रौद्री शान्ता सर्वायुः सर्वायुत्वाय सर्वमायुरेति य एवं वेद सो गायत्री ब्रह्म वै गायत्री ब्रह्मणैवैनं तन्नमस्यति ३४

वैश्वानरीयेणाग्निमारुतम्प्रतिपद्यते वैश्वानरो वा एतद्रेतः सिक्तम्प्राच्यावयत्तस्मा-द्वैश्वानरीयेणाग्निमारुतम्प्रतिपद्यतेऽनवानम्प्रथम ऋक्शंस्तव्याग्नीन्वा एषोऽर्ची-ष्यशान्ताउ प्रसीदन्नेति य आग्निमारुतं शंसति प्राणेनैव तदग्नींस्तरत्य-धीयन्नुपहन्यादन्यं विवक्तारमिछेत्तमेव तत्सेतुं कृत्वा तरति तस्मादाग्निमारुते न व्युच्यमेष्टव्यो विवक्ता मारुतं शंसति मरुतो ह वा एतद्रेतः सिक्तं धून्वन्तः

प्राच्यावयंस्तस्मान्मारुतं शंसति यज्ञायज्ञा वो अग्नये देवो वो द्रविणोदा इति मध्ये योनिं चानुरूपं च शंसति तद्यन्मध्ये योनिं चानुरूपम्च शंसति तस्मान्मध्ये योनिर्धृता यदु द्वे सूक्ते शस्त्वा शंसति प्रतिष्ठयोरेव तदुपरिष्टात्प्रजननं दधाति प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद ३५

जातवेदस्यं शंसति प्रजापतिः प्रजा असृजत ताः सृष्टाः पराच्य एवायन्न व्यावर्तन्त त अग्निना पर्यगछत्ता अग्निमुपावर्तन्त तमेवाद्याप्युपावृत्ताः सोऽब्रवीज्जाता वै प्रजा अनेनाविदमिति यदब्रवीज्जाता वै प्रजा अनेनाविदमिति तज्जातवेदस्यमभवत्तज्जातवेदसो जातवेदस्त्वं ता अग्निना परिगता निरुद्धाः शोचन्त्यः दीध्यत्योऽतिष्ठंस्ता अद्भिरभ्यषिञ्चत्तस्मादुपरिष्टाज्जातवेदस्यस्यापोहिष्ठीयम्शंसति तस्मात्तच्छमयतेव शंस्तव्यं ता अद्भिरभिषिच्य निजास्यैवामन्यत तासु वा अहिना बुध्न्येन परोक्षात्तेजोऽदधादेष ह वा अहिर्बुध्न्यो यदग्निर्गार्हपत्योऽग्निनैवासु तद्गार्हपत्येन परोक्षात्तेजो दधाति तस्मादाहुर्जुह्वदेवाजुह्वतो वसीयानिति ३६

देवानाम्पत्नीः शंसत्यनूचीरग्निं गृहपतिं तस्मादनूची पत्नी गार्हपत्यमास्ते तदाहू राकाम्पूर्वां शंसेज्जाम्यै वै पूर्वपेयमिति तत्तन्नादृत्यं देवानामेव पत्नीः पूर्वाः शंसेदेष ह वा एतत्पत्नीषु रेतो दधाति यदग्निर्गार्हपत्योऽग्निनैवासु तद्गार्हपत्येन पत्नीषु प्रत्यक्षाद्रेतो दधाति प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद तस्मात्समानोदर्या स्वसान्योदार्यै जायाया अनुजीविनी जीवति राकां शंसति राका ह वा एताम्पुरुषस्य सेवनीं सीव्यति यैषा शिश्नेऽधि पुमांसोऽस्य पुत्रा जायन्ते य एवं वेद पावीरवीं शंसति वाग्वै सरस्वती पावीरवी वाच्येव तद्वाचम्दधाति तदाहुर्यामीम्पूर्वां शंसेत् पित्र्यामिति यामीमेव पूर्वां शंसेदिमं यम प्रस्तरमा हि सीदेति राज्ञो वै पूर्वपेयं तस्माद्यामीमेव पूर्वां शंसेन्मातली कव्यैर्यमो अङ्गिरोभिरिति काव्यानामनूचीं शंसत्यवरेणैव वै देवान्काव्याः परेणैव पितृंस्तस्मात्काव्यानामनूचीं शंसत्युदीरतामवर उत्परास इति पित्र्याः शंसत्युन्मध्यमाः पितरः सोम्यास इति ये चैवावमा ये च परमा ये च मध्यमास्तान्सर्वाननन्तरायम्पृणात्याहम्पितृन्सुविदत्राँ अवित्सीति द्वितीयां शंसति बर्हिषदो ये स्वधया सुतस्येत्येतद्ध वा एषाम्प्रियं धाम यद्बर्हिषद इति प्रियेणैवैनांस्तद्धाम्ना समर्धयति प्रियेण धाम्ना समृध्यते य एवं वेदेदम्पितृभ्यो

नमो अस्त्वद्येति नमस्कारवतीमन्ततः शंसति तस्मादन्ततः पितृभ्यो नमस्क्रियते तदाहुर्व्याहावम्पित्र्याः शंसेदव्याहावामिति व्याहावमेव शंसेदसंस्थितं वै पितृयज्ञस्य साध्वसंस्थितं वा एष पितृयज्ञं संस्थापयति योऽव्याहावं शंसति तस्माद्व्याहावमेव शंस्तव्यम् ३७

स्वादुष्किलायम्मधुमाँ उतायमितीन्द्रस्यैन्द्रीरनुपानीयाः शंसत्येताभिर्वा इन्द्रस्तृतीयसवनमन्वपिबत्तदनुपानीयानामनुपानीयात्वम्माद्यन्तीव वै तर्हि देवता यदेता होता शंसति तस्मादेतासु मद्वत्प्रतिगीर्यं ययोरोजसा स्कभिता रजांसीति वैष्णुवारुणीमृचं शंसति विष्णुर्वै यज्ञस्य दुरिष्टम्पाति वरुणः स्विष्टं तयोरुभयोरेव शान्त्यै विष्णोर्नु कं वीर्याणि प्र वोचमिति वैष्णवीं शन्सति यथा वै मत्यमेवं यज्ञस्य विष्णुस्तद्यथा दुष्कृष्टं दुर्मतीकृतं सुकृष्टं सुमतीकृतं कुर्वन्नियादेवमेवैतद्यज्ञस्य दुष्टुतं दुःशस्तं सुष्टुतं सुशस्तं कुर्वन्नेति यदेतां होता शंसति तन्तुं तन्वन्रजसो भानुमन्विहीति प्राजापत्यां शंसति प्रजा वै तौतुः प्रजामेवास्म एतत्संतनोति ज्योतिष्मतः पथो रक्ष धिया कृतानिति देवयाना वै ज्योतिष्मन्तः पन्थानस्तानेवास्मा एतद्वितनोत्यनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनमित्येवैनं तन्मनोः प्रजया संतनोति प्रजात्यै प्रजायते प्रजया पशुभिर्य एवम्वेदैवा न इन्द्रो मघवा विरप्शीत्युत्तमया परिदधातीयं वा इन्द्रो मघवा विरप्शी करत्सत्या चर्षणीधृदनर्वेतीयं वै सत्या चर्षणीधृदनर्वा त्वं राजा जनुषां धेह्यस्मे इतीयं वै राजा जनुषामधि श्रवो माहिनं यज्जरित्र इतीयं वै माहिनं यज्ञः श्रवो यजमानो जरिता यजमानायैवैतामाशिषमाशास्ते तदुपस्पृशन्भूमिम्परिदध्यात्तद्यस्यामेव यज्ञं सम्भरति तस्यामेवैनं तदन्ततः प्रतिष्ठापयत्यग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिरित्याग्निमारुतमुक्थं शस्त्वाग्निमारुत्या यजति यथाभागं तद्देवताः प्रीणाति प्रीणाति ३८ ३

अध्याय १४ खण्डः १-६

देवा वा असुरैर्युद्धमुपप्रायन्विजयाय तानग्निर्नान्वकामयतैतुं तं देवा अब्रुवन्न् अपि त्वमेह्यस्माकं वै त्वमेकोऽसीति स नास्तुतोऽन्वेष्यामीत्यब्रवीत्स्तुत नु मेति तं ते समुत्क्रम्योपनिवृत्यास्तुवंस्तान्स्तुतोऽनुप्रैत्स त्रिःश्रेणिर्भूत्वा त्र्यनीकोऽसुरान्युद्धमुपप्रायद्विजयाय त्रिःश्रेणिरिति छन्दांस्येव श्रेणीरकुरुत त्र्यनीक इति सवनान्येवानीकानि तानसम्भाव्यम्पराभावयत्ततो वै देवा

अभवन्परासुरा भवत्यात्मना परास्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद सा वा एषा गायत्र्येव यदग्निष्टोमश्चतुर्विंशत्यक्षरा वै गायत्री चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि तद्वै यदिदमाहुः सुधायां ह वै वाजि सुहितो दधातीति गायत्री वै तन्न ह वै गायत्री क्षमा रमत ऊर्ध्वा ह वा एषा यजमानमादाय स्वारेतित्यग्निष्टोमो वै तन्न ह वा अग्निष्टोमः क्षमा रमत ऊर्ध्वो ह वा एष यजमानमादाय स्वरेति स वा एष संवत्सर एव यदग्निष्टोमश्चतुर्विंशत्यर्धमासो वै संवत्सरश्चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि तं यथा समुद्रं स्रोत्या एवं सर्वे यज्ञक्रतवोऽपियन्ति ३९

दीक्षणीयेष्टिस्तायते तामेवानु याः काश्चेष्टयस्ताः सर्वा अग्निष्टोममपियन्तीळामुपह्वयत इळाविधा वै पाकयज्ञा इळामेवानु ये केच पाकयज्ञास्ते सर्वेऽग्निष्टोममपियन्ति सायम्प्रातरग्निहोत्रं जुह्वति सायम्प्रातर्व्रतम्प्रयछन्ति स्वाहाकारेणाग्निहोत्रं जुह्वति स्वाहाकारेण व्रतम्प्रयछन्ति स्वाहाकारमेवान्वग्निहोत्रमग्निष्टोममप्येति पञ्चदश प्रायणीये सामिधेनीरन्वाह पञ्चदश दर्शपूर्णमासयोः प्रायणीयमेवानु दर्शपूर्णमासावग्निष्टोममपीतः सोमं राजानं क्रीणन्त्यौषधो वै सोमो राजाउषधिभिस्तम्भिषज्यन्ति यम्भिषज्यन्ति सोममेव राजानं क्रीयमाणमनु यानि कानिच भेषजानि तानि सर्वाण्यग्निष्टोममपियन्त्यग्निमातिथ्ये मन्थन्त्यग्निं चातुर्मास्येष्वातिथ्यमेवानु चातुर्मास्यान्यग्निष्टोममपियन्ति पयसा प्रवर्ग्ये चरन्ति पयसा दाक्षायणयज्ञे प्रवर्ग्यमेवानु दाक्षायणयज्ञोऽग्निष्टोममप्येति पशुरुपवसथे भवति तमेवानु ये केच पशुबन्धास्ते सर्वेऽग्निष्टोममपियन्तीळादधो नाम यज्ञक्रतुस्तं दध्ना चरन्ति दध्ना दधिघर्मे दधिघर्ममेवान्विळादधोऽग्निष्टोममप्येति ४०

इति नु पुरस्तादथोपरिष्टात्पञ्चदशोक्थ्यस्य स्तोत्राणि पञ्चदश शस्त्राणि स मासो मासधा संवत्सरो विहितः संवत्सरोऽग्निर्वैश्वानरोऽग्निरग्निष्टोमः संवत्सरमेवानूक्थ्योऽग्निष्टोममप्येत्युक्थ्यमपियन्तमनु वाजपेयोऽप्येत्युक्थ्यो हि स भवति द्वादश रात्रेः पर्यायाः सर्वे पञ्चदशास्ते द्वौ-द्वौ सम्पद्य त्रिंशदेकविंशं षोळशि साम त्रिवृत्संधिः सा त्रिंशत्स मासस्त्रिंशन्मासस्य रात्रयो मासधा संवत्सरो विहितः संवत्सरोऽग्निर्वैश्वानरोऽग्निरग्निष्टोमः संवत्सरमेवान्वतिरात्रोऽग्निष्टोममप्येत्यतिरात्रमपियन्तमन्वप्तोर्यामोऽप्येत्यतिरात्रो हि स भवत्येतद्वै ये

च पुरस्ताद्ये चोपरिष्टाद्यज्ञक्रतवस्ते सर्वेऽग्निष्टोममपियन्ति तस्य संस्तुतस्य नवतिशतं स्तोत्रियाः सा या नवतिस्ते दश त्रिवृतोऽथ या नवतिस्ते दशाथ या दश तासामेका स्तोत्रियोदेति त्रिवृत्परिशिष्यते सोऽसावेकविंसोऽध्याहितस्तपति विषुवान्वा एष स्तोमानां दश वा एतस्मादर्वाञ्चास्त्रिवृतो दश पराञ्चो मध्य एष एकविंश उभयतोऽध्याहितस्तपति तद्यासौ स्तोत्रियोदेति सैतस्मिन्नध्यूळ्हा स यजमनस्तद्दैवं क्षत्रं सहो बलमश्नुते ह वै दैवं क्षत्रं सहो बलमेतस्य ह सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद ४१

देवा वा असुरैर्विजिग्याना ऊर्ध्वाः स्वर्गं लोकमायन्सोऽग्निर्दिविस्पृगूर्ध्व उदश्रयत स स्वर्गस्य लोकस्य द्वारमवृणोदग्निर्वै स्वर्गस्य लोकस्याधिपतिस्तं वसवः प्रथमा आगछंस्त एनमब्रुवन्नति नोऽर्जस्वाकाशं नः कुर्विति स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत्स्तुत नु मेति तथेति तं ते त्रिवृता स्तोमेनास्तुवंस्तान्स्तुतोऽत्यार्जत ते यथालोकमगछंस्तं रुद्रा आगछंस्त एनमब्रुवन्नति नोऽर्जस्वाकाशं नः कुर्विति स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत्स्तुत नु मेति तथेति तं ते पञ्चदशेन स्तोमेनास्तुवंस्तान्स्तुतोऽत्यार्जत ते यथालोकमगछंस्तमादित्या आगछंस्त एनमब्रुवन्नति नोऽर्जस्वाकाशं नः कुर्विति स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत्स्तुत नु मेति तथेति तं ते सप्तदशेन स्तोमेनास्तुवंस्तान्स्तुतोऽत्यार्जत ते यथालोकमगछंस्तं विश्वे देवा आगछंस्त एनमब्रुवन्नति नोऽर्जस्वाकाशं नः कुर्विति स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत्स्तुत नु मेति तथेति तं त एकविंशेन स्तोमेनास्तुवंस्तान्स्तुतोऽत्यार्जत ते यथालोकमगछन्नेकैकेन वै तं देवाः स्तोमेनास्तुन्वंस्तान्स्तुतोऽत्यार्जत ते यथालोकमगछन्नथ हैनमेष एतैः सर्वैः स्तोमैः स्तौति यो यजते यश्चैनमेवं वेदातित्तु तमर्जाता अति ह वा एनमर्जते स्वर्गं लोकमभि य एवं वेद ४२

स वा एषोऽग्निरेव यदग्निष्टोनिअस्तं यदस्तुवंस्तस्मादग्निस्तोमस्तमग्निस्तोमं सन्तमग्निष्टोम इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवास्तं यच्चतुष्टया देवाश्चतुर्भिः स्तोमैरस्तुवंस्तस्माच्चतुस्तोमस्तं चतुस्तोमं सन्तं चतुष्टोम इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवा अथ यदेनमूर्ध्वं सन्तं ज्योतिर्भूतमस्तुवंस्तस्माज्ज्योतिस्तोमस्तं ज्योतिस्तोमं सन्तं ज्योतिष्टोम इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः स वा एषोऽपूर्वोऽनपरो यज्ञक्रतुर्यथा

रथचक्रमनन्तमेवं यदग्निष्टोमस्तस्य यथैव प्रायणं तथोदयनं तदेषाभि यज्ञगाथा गीयते यदस्य पूर्वमपरं तदस्य यद्वस्यापरं तद्वस्य पूर्वमहेरिव सर्पणं शाकलस्य न विजानन्ति यतरत्परस्ताद् इति यथा ह्येवास्य प्रायणमेवमुदयनमसदिति तदाहुर्यत्त्रिवृत्प्रायणमेकविंशमुदयंश्रं केन ते समे इति यो वा एकविंशस्त्रिवृद्वै सोऽथो यदुभौ तृश्रौ तृचिनाविति ब्रूयात्तेनेति ४३

यो वा एष तपत्येषोऽग्निष्टोम एष साह्नस्तं सहैवाह्ना संस्थापयेयुः साह्नो वै नाम तेन संत्वरमानाश्चरेयुर्यथैव प्रातःसवन एवम्माध्यंदिन एवं तृतीयसवन एवमु ह यजमानोऽप्रमायुको भवति यद्ध वा इदम्पूर्वयोः सवनयोरसंत्वरमाणाश्चरन्ति तस्माद्धेदम्प्राच्यो ग्रामता बहुलाविष्टा अथ यद्धेदं तृतीयसवने संत्वरमाणश्चरन्ति तस्माद्धेदम्प्रत्यञ्चि दीर्घारण्यानि भवन्ति तथा ह यजमानः प्रमायुको भवति तेनासंत्वरमाणाश्चरेयुर्यथैव प्रातःसवन एवम्माध्यंदिन एवं तृतीयसवन एवमु ह यजमानोऽप्रमायुको भवति स एतमेव शस्त्रेणानुपर्यावर्तेत यदा वा एष प्रातरुदेत्यथ मन्द्रं तपति तस्मान्मन्द्रया वाचा प्रातःसवने शांसेदथ यदाभ्येत्यथ बलीयस्तपति तस्माद्बलीयस्या वाचा मध्यंदिने शंसेदथ यदाभितरामेत्यथ बलिष्ठतमं तपति तस्माद्बलिष्ठतमया वाचा तृतीयसवने शंसेदेवं शंसेद्यदि वाच ईशीत वाग्घि शस्त्रं यया तु वाचोत्तरोत्तरिण्योत्सहेत समापनाय तया प्रतिपद्येतैतत्सुशस्ततममिव भवति स वा एष न कदा चनास्तमेति नोदेति तं यदस्तमेतीति मन्यन्तेऽह्न एव तदन्तमित्वाथात्मानं विपर्यस्यते रात्रीमेवावस्तात्कुरुतेऽहः परस्तादथ यदेनम्प्रातरुदेतीति मन्यन्ते रात्रेरेव तदन्तमित्वाथात्मानं विपर्यस्यतेऽहरेवावस्तात्कुरुते रात्रीम्परस्तात्स वा एष न कदा चन निम्रोचति न ह वै कदा चन निम्रोचत्येतस्य ह सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद य एवं वेद ४४ ४

## अध्याय १५ खण्डः १-६

यज्ञो वै देवेभ्योऽन्नाद्यमुदक्रामत्ते देवा अब्रुवन्यज्ञो वै नोऽन्नाद्यमुदक्रमीदन्विमं यज्ञमन्न अन्विछामेति तेऽब्रुवन्कथमन्विछामेति ब्राह्मणेन च छन्दोभिश्चेत्यब्रुवंस्ते ब्राह्मणं छन्दोभिरदीक्षयंस्तस्यान्तं यज्ञमतन्वतापि पत्नीः समयाजयंस्तस्माद्धाप्येतर्हि दीक्षणीयायामिष्टावान्तमेव यज्ञं तन्वतेऽपि पत्नीः संयाजयन्ति तमनु न्यायमन्ववायंस्ते प्रायणीयमतन्वत तम्प्रायणीयेन नेदीयोऽन्वा-

गछंस्ते कर्मभिः समत्वरन्त तच्छंय्वन्तमकुर्वंस्तस्माद्धाप्येतर्हि प्रायणीयं शंय्वन्तमेव भवति तमनु न्यायमन्ववायंस्त स्रातिथ्यमतन्वत तमातिथ्येन नेदीयोऽन्वागछंस्ते कर्मभिः समत्वरन्त तदिळान्तमकुर्वंस्तस्माद्धाप्येतर्ह्या-तिथ्यमिळान्तमेव भवति तमनु न्यायमन्ववायंस्त उपसदोऽतन्वत तमुपस-द्भिर्नेदीयोऽन्वागछंस्ते कर्मभिः समत्वरन्त ते तिस्रः सामिधेनीरनूच्य तिस्रो देवता स्रयजंस्तस्माद्धाप्येतर्ह्युपसत्सु तिस्र एव सामिधेनीरनूच्य तिस्रो देवता यजन्ति तमनु न्यायमन्ववायंस्त उपवसथमतन्वत तमुपवसथ्येऽहन्याप्नुवंस्त-माप्त्वान्तं यज्ञमतन्वतापि पत्नीः समयाजयंस्तस्माद्धाप्येतर्ह्युपवसथ स्रान्तमेव यज्ञं तन्वतेऽपि पत्नीः संयाजयन्ति तस्मादेतेषु पूर्वेषु कर्मसु शनैस्तरां-शनैस्तरामिवानुब्रूयादनूत्सरमिव हि ते तमायांस्तस्मादुपवसथे यावत्या वाचा कामयीत तावत्यानुब्रूयादाप्तो हि स तर्हि भवतीती तमाप्त्वाब्रुवंस्तिष्ठस्व नोऽन्नाद्यायेति स नेत्यब्रवीत्कथं वस्तिष्ठेयेति तानीक्षतैव तमब्रुवन्ब्राह्मणेन च नश्छन्दोभिश्च सयुग्भूत्वान्नाद्याय तिष्ठस्वेति तथेति तस्माद्धाप्येतर्हि यज्ञः सयुग्भूत्वा देवेभ्यो हव्यं वहति ब्राह्मणेन च छन्दोभिश्च ४५

त्रीणि ह वै यज्ञे क्रियन्ते जग्धं गीर्णं वान्तं तद्धैतदेव जग्धं यदाशंसमंनमार्त्विज्यं कारयत उत वा मे दद्यादुत वा मा वृणीतेति तद्ध तत्पराङेव यथा जग्धं न हैव तद्यजमानम्भुनक्त्यथ हैतदेव गीर्णं यद्भिभ्यदार्त्विज्यं कारयत उत वा मा न बाधेतोत वा मे न यज्ञवेशशां कुर्यादिति तद्ध तत्पराङेव यथा गीर्णं न हैव तद्यजमानम्भुनक्त्यथ हैतदेव वान्तं यदभिशस्यमानमार्त्विज्यं कारयते यथा ह वा इदं वान्तान्मनुष्या बीभत्सन्त एवम्तस्माद्देवास्तद्ध तत्पराङेव यथा वान्तं न हैव तद्यजमानम्भुनक्ति स एतेषां त्रयाणामाशाम्नेयात्तं यद्येतेषां त्रयाणा-मेकंचिदकाममभ्याभवेत्तस्यास्ति वामदेव्यस्य स्तोत्रे प्रायश्चित्तिरिदं वा इदं वामदेव्यं यजमानलोकोऽमृतलोकः स्वर्गो लोकस्तत्त्रिभिरक्षरैर्न्यूनं तस्य स्तोत्र उपसृप्य त्रेधात्मानं विगृह्णीयात् पुरुष इति स एतेषु लोकेष्वात्मानं दधात्यस्मिन्यजमानलोकेऽस्मिन्नमृतलोकेऽस्मिन्स्वर्गे लोके स सर्वां दुरिष्टि-मत्येत्यपि यदि समृद्धा इव ऋत्विजः स्युरिति ह स्माहाथ हैतज्जपेदेवेति ४६

छन्दांसि वै देवेभ्यो हव्यमूढ्वा श्रान्तानि जघनार्धे यज्ञस्य तिष्ठन्ति यथाश्वो वाश्वतरो वोहिवांस्तिष्ठेदेवं तेभ्य एतम्मैत्रावरुणम्पशुपुरोळाशमनु देविका-

हवींषि निर्वपेद्धात्रे पुरोळाशं द्वादशकपालं यो धाता स वषट्कारोऽनुमत्यै चरुं यानुमतिः सा गायत्री राकायै चरुं या राका सा त्रिष्टुप् सिनीवाल्यै चरुं या सिनीवाली सा जगती कुह्वै चरुं या कुहूः सानुष्टुबेतानि वाव सर्वाणि छन्दांसि गायत्रं त्रैष्टुभं जागतमानुष्टुभमन्वन्यान्येतानि हि यज्ञे प्रतमामिव क्रियन्त एतैर्ह वा अस्य छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टम्भवाति य एवं वेद तद्वै यदिदमाहुः सुधायां ह वै वाजी सुहितो दधातीति छन्दांसि वै तत्सुधायां ह वा एनं छन्दांसि दधत्यननुध्यायिनं लोकं जयति य एवं वेद तद्धैक आहुर्धातारमेव सर्वासाम्पुरस्तात्पुरस्तादाज्येन परियजेत्तदासु सर्वासु मिथुनं दधातीति तदु वा आहुर्जामि वा एतद्यज्ञे क्रियते यत्र समानीभ्यामृग्भ्यं समानेऽहन्यजतीति यदि ह वा अपि बह्व्य इव जायाः पतिर्वाव तासाम्मिथुनं तद्यदासां धातारम्पुरस्ताद्यजति तदासु सर्वासु मिथुनं दधातीति नु देविकानाम् ४७

अथ देवीनां सूर्याय पुरोळाशमेककपालं यः सूर्यः स धाता स उ एव वषट्कारो दिवे चरुं या द्यौः सानुमतिः सो एव गायत्र्युषसे चरुं योषाः सा राका सो एव त्रिष्टुब्गवे चरुं या गौः सा सिनीवाली सो एव जगती पृथिव्यै चरुं या पृथिवी सा कुहूः सो एवानुष्टुबेतानि वाव सर्वाणि छन्दांसि गायत्रं त्रैष्टुभं जागतमानुष्टुभमन्वन्यान्येतानि हि यज्ञे प्रतमामिव क्रियन्त एतैर्ह वा अस्य छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टम्भवति य एवं वेद तद्वै यदिदमाहुः सुधायां ह वै वाजी सुहितो दधातीति छन्दांसि वै तत्सुधायां ह वा एनं छन्दांसि दधत्यननुध्यायिनं लोकं जयति य एवं वेद तद्धैक आहुः सूर्यमेव सर्वासाम्पुरस्तात्पुरस्तादाज्येन परियजेत्तदासु सर्वासु मिथुनं दधातीति तदु वा आहुर्जामि वा एतद्यज्ञे क्रियते यत्र समानीभ्यामृग्भ्यां समानेऽहन्यजतीति यदि ह वा अपि बह्व्य इव जायाः पतिर्वाव तासाम्मिथुनं तद्यदासां सूर्यम्पुरस्ताद्यजति तदासु सर्वासु मिथुनं दधाति ता या इमास्ता अमूर्या अमूस्ता इमा अन्यतराभिर्वाव तं काममाप्नोति य एतासूभयीषु ता उभयीर्गतश्रियः प्रजातिकामस्य संनिर्वपेन्न त्वेषिष्यमाणस्य यदेना एषिष्यमाणस्य संनिर्वपेदीश्वरो हास्य वित्ते देवा अरन्तोर्यद्वा अयमात्मनेऽलममंस्तेति ता ह शुचिवृक्षो गौपलायनो वृद्धद्युम्नस्याभिप्रतारिणस्योभयीर्यज्ञे संनिरुवाप तस्य ह रथगृत्सं गाहमानं दृष्ट्वोवाचेत्थमहमस्य राजन्यस्य देविकाश्च देवीश्चोभयीर्यज्ञे सममादयं यदस्येत्थं रथगृत्सो गाहत इति चतुःषष्टिः कवचिनः शश्वद्धास्य ते पुत्रनप्तार

ग्रासुः ४८

ग्रग्निष्टोमं वै देवा ग्रश्रयन्तोक्थान्यसुरास्ते समावद्वीर्या एवासन्न व्यावर्तन्त तान्भरद्वाज ऋषीणामपश्यदिमे वा ग्रसुरा उक्थेषु श्रितास्तानेषां न कश्चन पश्यतीति सोऽग्निमुदह्वयदेह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिर इत्यसुर्या ह वा इतरा गिरः सोऽग्निरुपोत्तिष्ठन्नब्रवीत्किं स्विदेव मह्यं कृशो दीर्घः पलितो वद्त्यतीति भरद्वाजो ह वै कृशो दीर्घः पलित ग्रास सोऽब्रवीदिमे वा ग्रसुरा उक्थेषु श्रितास्तान्वो न कश्चन पश्यतीति तानग्निरश्वो भूत्वाभ्यत्यद्रवद्यदग्निरश्वो भूत्वाभ्यत्यद्रवत्तत्साकमश्वं सामाभवत्तत्साकमश्वस्य साकमश्वत्वं तदाहुः साकमश्वेनोक्थानि प्रणयेदप्रणीतानि वाव तान्युक्थानि यान्यन्यत्र साकमश्वा-दिति प्रमंहिष्ठीयेन प्रनयेदित्याहुः प्रमंहिष्ठीयेन वै देवा ग्रसुरानुक्थेभ्यः प्राणुदन्त तत्प्राहैव प्रमंहिष्ठीयेन नयेत्प्र साकमश्वेन ४९

ते वा ग्रसुरा मैत्रावरुणस्योक्थमश्रयन्त सोऽब्रवीदिन्द्रः कश्चाहं चेमानि-तोऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद्वरुणस्तस्मादैन्द्रावरुणम्मैत्रावरुणस्तृती-यसवने शंसतीन्द्रश्च हि तान्वरुणश्च ततोऽनुदेतां ते वै ततोऽपहता ग्रसुरा ब्राह्म-नाच्छंसिन उक्थमश्रयन्त सोऽब्रवीदिन्द्रः कश्चाहं चेमानितोऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद्बृहस्पतिस्तस्मादैन्द्राबार्हस्पत्यम्ब्राह्मणाच्छंसी तृतीयसवने शंसतीन्द्रश्च हि तान्बृहस्पतिश्च ततोऽनुदेतां ते वै ततोऽपहता ग्रसुरा ग्रछा-वाकस्योक्थमश्रयन्त सोऽब्रवीदिन्द्रः कश्चाहं चेमानितोऽसुरान्नोत्स्यावहा इत्यहं चेत्यब्रवीद्विष्णुस्तस्मादैन्द्रावैष्णवमछावाकस्तृतीयसवने शंसतीन्द्रश्च हि ता-न्विष्णुश्च ततोऽनुदेतां द्वन्द्वमिन्द्रेण देवताः शस्यन्ते द्वन्द्वं वै मिथुनं त-स्माद्द्वन्द्वान्मिथुनम्प्रजायते प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेदाथ हैते पोत्रीयाश्च नेष्ट्रीयाश्च चत्वार ऋतुयाजाः षळृचः सा विराड्दशिनी तद्विराजि यज्ञं दशिन्याम्प्रतिष्ठापयन्ति प्रतिष्ठापयन्ति ५० ३

इति तृतीयपञ्चिका समाप्ता

## पञ्चिका ४
## अध्याय १६ खराडः १-६

देवा वै प्रथमेनाह्नेन्द्राय वज्रं समभरंस्तं द्वितीयेनाह्नासिञ्चंस्तं तृतीयेनाह्ना प्रायछंस्तं चतुर्थेऽहन्प्राहरत्तस्माच्चथुर्थेऽहन्षोळशिनं शंसति वज्रो वा एष यत्षोळाशी तद्यच्चतुर्थेऽहन्षोळशिनं शंसति वज्रमेव तत्प्रहरति द्विषते भ्रातृव्याय वधं योऽस्य स्तृत्यस्तस्मै स्तर्तवै वज्रो वै षोळशी पशव उक्थानि तम्परस्तादुक्थानाम्पर्यस्य शंसति तं यत्परस्तादुक्थानाम्पर्यस्य शंसति वज्रेणैव तत्षोळशिना पशून्परिगछति तस्मात्पशवो वज्रेणैव षोळशिना परिगता मनुष्यानभ्युपावर्तन्ते तस्मादश्वो वा पुरुषो वा गौर्वा हस्ती वा परिगत एव स्वयमात्मनेत एव वाचाभिषिद्ध उपावर्तते वज्रमेव षोळशिनम्पश्यन्वज्रेणैव षोळशिना परिगतो वाग्घि वज्रो वाक्षोळशी तदाहुः किं षोळशिनः षोळशित्वमिति षोळशः स्तोत्राणां षोळशः शस्त्राणां षोळशभिरक्षरैरादत्ते षोळशिभिः प्रणौति षोळशपदां निविदं दधाति तत्षोळशिनः षोळशित्वं द्वे वा अक्षरे अतिरिच्येते षोळशिनोऽनुष्टुभमभिसम्पन्नस्य वाचो वाव तौ स्तनौ सत्यानृते वाव ते अवत्येनं सत्यं नैनमनृतं हिनस्ति य एवं वेद १

गौरिवीतं षोळशि साम कुर्वीत तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसं गौरिवीतं तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान्गौरिवीतं षोळशि सम कुरुते नानदं षोळशि साम कर्तव्यमित्याहुरिन्द्रो वै वृत्राय वज्रमुदयछत्तमस्मै प्राहरत्तमभ्यहनत्सोऽभिहतो व्यनदद्यद्व्यनदत्तन्नानदं सामाभवत्तन्नानदस्य नानदत्वमभ्रातृव्यं वा एतद्भ्रातृव्यहा साम यन्नानदमभ्रातृव्यो भ्रातृव्यहा भवति य एवं विद्वान्नानदं षोळशि साम कुरुते तद्यदि नानदं कुर्युरविहृतः षोळशी शंस्तव्यो ऽविहृतासु हि तासु स्तुवते यदि गौरिवीतं विहृतः षोळशी शंस्तव्यो विहृतासु हि तासु स्तुवते २

अथातश्छन्दांस्येव व्यतिषजत्या त्वा वहन्तु हरय उपो षु शृणुही गिर इति गायत्रीश्च पङ्क्तीश्च व्यतिषजति गायत्रो वै पुरुषः पाङ्क्ताः पशवः पुरुषमेव तत्पशुभिर्व्यतिषजति पशुषु प्रतिष्ठापयति यदु गायत्री च पङ्क्तिश्च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद्वाज्ररूपान्नैति यदिन्द्र पृतनाज्येऽयं ते अस्तु हर्यत इत्युष्णिहश्च बृहतीश्च व्यतिषजत्यौष्णिहो वै पुरुषो बार्हताः पशवः पुरुषमेव

तत्पशुभिर्व्यतिषजति पशुषु प्रतिष्ठापयति यदुष्णिक्च बृहती च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद्वज्ररूपान्नैत्या धूर्षु अस्मै ब्रह्मन्वीर ब्रह्मकृतिं जुषाण इति द्विपदां च त्रिष्टुभं च व्यतिषजति द्विपाद्वै पुरुषो वीर्यं त्रिष्टुप्पुरुषमेव तद्वीर्येण व्यतिषजति वीर्ये प्रतिष्ठापयति तस्मात्पुरुषो वीर्ये प्रतिष्ठितः सर्वेषाम्पशुनां वीर्यवत्तमो यदु द्विपदा च विंशत्यक्षरा त्रिष्टुप्च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद्वज्ररूपन्नैत्येष ब्रह्मा प्र ते महे विदथे शंसिषं हरी इति द्विपदाश्च जगतीश्च व्यतिषजति द्विपाद्वै पुरुषो जागताः पशवः पुरुषमेव तत्पशुभिर्व्यतिषजति पशुषु प्रतिष्ठापयति तस्मात्पुरुषः पशुषु प्रतिष्ठितोऽत्ति चैनानधि च तिष्ठति वशे चास्य यदु द्विपदा च षोळशाक्षरा जगती च ते द्वे अनुष्टुभौ तेनो वाचो रूपादनुष्टुभो रूपाद्वज्ररूपान्नैति त्रिकद्रुकेषु महिषो यवाशिरम्प्रो ष्वस्मै पुरोरथमित्यतिछन्दसः शंसति छन्दसां वै यो रसोऽत्यक्षरत्सोऽतिछन्दसमभ्यत्यक्षरत्तदतिछन्दसोऽतिछन्दस्त्वं सर्वेभ्यो वा एष छन्दोभ्यः संनिर्मितो यत्षोळशी तद्यदतिछन्दसः शंसति सर्वेभ्य एवैनं तच्छन्दोभ्यः संनिर्मिमीते सर्वेभ्यश्छन्दोभ्यः संनिर्मितेन षोळशिना राध्नोति य एवं वेद ३

महानाम्नीनामुपसर्गानुपसृजत्ययं वै लोकः प्रथमा महानाम्न्यन्तरिक्षलोको द्वितीयासौ लोकस्तृतीया सर्वेभ्यो वा एष लोकेभ्यः संनिर्मितो यत्षोलशी तद्यन्महानाम्नीनामुपसर्गानुपासृजति सर्वेभ्य एवैनं तल्लोकेभ्यः संनिर्मिमीते सर्वेभ्यो लोकेभ्यः संनिर्मितेन षोळशिना राध्नोति य एवं वेद प्रप्र वस्त्रिष्टुभमिषमर्चत प्रार्चत यो व्यतीँरफाणयदिति प्रज्ञाता अनुष्टुभः शंसति तद्यथेह चेह चापथेन चरित्वा पन्थानम्पर्यवेयात्तादृतद्यत्प्रज्ञाता अनुष्टुभः शंसति स यो व्याप्तो गतश्रीरिव मन्येताविहृतं षोळशिनं शंसयेन्नेच्छन्दसां कृछ्रादवपद्या इत्यथ यः पाप्मानमपजिघांसुः स्याद्विहृतं षोळसिनं शंसयेद्व्यतिषक्त इव वै पुरुषः पाप्मना व्यतिषक्तमेवास्मै तत्पाप्मानं शमलं हन्त्यप पाप्मानं हते य एवं वेदोद्यद्ब्रध्नस्य विष्टपमित्युत्तमया परिदधाति स्वर्गो वै लोको ब्रध्नस्य विष्टपम्स्वर्गमेव तल्लोकं यजमानं गमयत्यपाः पूर्वेषां हरिवः सुतानामिति यजति सर्वेभ्यो वा एष सवनेभ्यः संनिर्मितो यत्षोळशी तद्यदपाः पूर्वेषां हरिवः सुतानामिति यजति पीतवद्वै प्रातःसवनम्प्रातःसवनादेवैनं तत्संनिर्मिमीतेऽथो इदं सवनं केवलं त इति माध्यंदिनं वै सवनं केवलम्माध्यंदिनादेवैनं

तत्सवनात्संनिर्मिमीते ममद्धि सोमम्मधुमन्तमिन्द्रेति मद्वद्वै तृतीयसवनं तृतीयसवनादेवैनं तत्संनिर्मिमीते सत्रा वृषञ्जठर श्रा वृषस्वेति वृषरावद्वै षोळशिनो रूपं सर्वेभ्यो वा एष सवनेभ्यः संनिर्मितो यत्षोळशी तद्यदपाः पूर्वेषां हरिवः सुतानामिति यजति सर्वेभ्य एवैनं तत्सवनेभ्यः संनिर्मिमीते सर्वेभ्यः सवनेभ्यः संनिर्मितेन षोळशिना राध्नोति य एवं वेद महानाम्नीनाम्पञ्चाक्षरानुपसर्गानुपसृजत्येकादशाक्षरेषु पादेषु सर्वेभ्यो वा एष छन्दोभ्यः संनिर्मितो यत्षोळशी तद्यन्महानाम्नीनाम्पञ्चाक्षरानुपसर्गानुपसृजत्ये-कादशाक्षरेषु पादेषु सर्वेभ्य एवैनं तच्छन्दोभ्यः संनिर्मिमीते सर्वेभ्यश्छन्दोभ्यः संनिर्मितेन षोळशिना राध्नोति य एवं वेद ४

श्रहर्वै देवा श्रश्रयन्त रात्रीमसुरास्ते समावद्वीर्या एवासन्न व्यावर्तन्त सोऽब्रवीदिन्द्रः कश्चाहं चेमानितोऽसुरान्रात्रीमन्ववेष्याव इति स देवेषु न प्रत्यविन्ददबिभयू रात्रेस्तमसो मृत्योस्तस्माद्धाप्येतर्हि नक्तं यावन्मत्रमि-वैवापक्रम्य बिभेति तम इव हि रात्रिर्मृत्युरिव तं वै छन्दांस्येवान्ववायंस्तं यच्छन्दांस्येवान्ववायंस्तस्मादिन्द्रश्चैव छन्दांसि च रात्रीं वहन्ति न निवि-च्छस्यते न पुरोरुङ्न धाय्या नान्या देवतेन्द्रश्च ह्येव छन्दांसि च रात्रीं वहन्ति तान्वै पर्यायैरेव पर्यायमनुदन्त यत्पर्यायैः पर्यायमनुदन्त तत्पर्यायाराम्पर्यायत्वं तान्वै प्रथमेनैव पर्यायेरा पूर्वरात्रादनुदन्त मध्यमेन मध्यरात्रादुत्तमेनापर-रात्रादपि शर्वर्या श्रनुस्मसीत्यब्रुवन्नपिशर्वराणि खलु वा एतानि छन्दांसीति ह स्माहैतानि हीन्द्रं रात्रेस्तमसो मृत्योर्बिभ्यतमत्यपारयंस्तदपिशर्वराणामपि-शर्वरत्वम् ५

पान्तमा वो श्रन्धस इत्यन्धस्वत्यानुष्टुभा रात्रीम्प्रतिपद्यल श्रानुष्टुभी वै रात्रिरेतद्रात्रिरूपमन्धस्वत्यः पीतवत्यो मद्वत्यस्त्रिष्टुभो याज्या भवन्त्यभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धम्प्रथमेन पर्यायेरा स्तुवते प्रथमान्येव पदानि पुनराददते यदेवैषामश्वा गाव श्रासंस्तदेवैषां तेनाददते मध्यमेन पर्यायेरा स्तुवते मध्यमान्येव पदानि पुनराददते यदेवैषामनोरथा श्रासंस्तदेवैषां तेनाददत उत्तमेन पर्यायेरा स्तुवत उत्तमान्येव पदानि पुनराददते यदेवैषां वासो हिरण्यम्मणिरध्यात्ममासीत्तदेवैषां तेनाददत श्रा द्विषतो वसु दत्ते निरेनमेभ्यः सर्वेभ्यो लोकेभ्यो नुदते य एवं वेद पवमानवदहरित्याहुर्न रात्रिः पवमानवती

कथमुभे पवमानवती भवतः केन ते समावद्भाजौ भवत इति यदेवेन्द्राय मद्वने सुतमिदं वसो सुतमन्ध इदं ह्यन्वोजसा सुतमिति स्तुवन्ति च शंसन्ति च तेन रात्रिः पवमानवती तेनोभे पवमानवती भवतस्तेन ते समावद्भाजौ भवतः पञ्चदशस्तोत्रमहरित्याहुर्न रात्रिः पञ्चदशस्तोत्रा कथमुभे पञ्चदशस्तोत्रे भवतः केन ते समावद्भाजौ भवत इति द्वादश स्तोत्राण्यपिशर्वराणि तिसृभिर्देवताभिः संधिना राथंतरेण स्तुवते तेन रात्रिः पञ्चदशस्तोत्रा तेनोभे पञ्चदशस्तोत्रे भवतस्तेन ते समावद्भाजौ भवतः परिमितं स्तुवन्त्यपरिमितमनुशंसति परिमितं वै भूतमपरिमितम्भव्यमपरिमितस्यावरुद्ध्या इत्यतिशंसति स्तोत्रमति वै प्रजात्मानमति पशवस्तद्यत्स्तोत्रमतिशंसति यदेवास्यात्यात्मानं तदेवास्यै तेनावरुन्द्धेऽवरुन्द्धे ६ १

अध्याय १७ खण्डः १-८

प्रजापतिर्वै सोमाया राज्ञे दुहितरम्प्रायछत्सूर्यां सावित्रीं तस्यै सर्वे देवा वरा आगछंस्तस्या एतत्सहस्रं वहतुमन्वाकरोद्यदेतदाश्विनमित्याचक्षतेऽनाश्विनं हैव तद्यदर्वाक्सहस्रं तस्मात्तत्सहस्रं वैव शंसेद्भूयो वा प्राश्य घृतं शंसेद्यथा ह वा इदमनो वा रथो वाक्तो वर्तत एवं हैवाक्तो वर्तते शकुनिरिवोत्पतिष्यन्नाह्वयीत तस्मिन्देवा न समजानत ममेदमस्तु ममेदमस्त्विति ते संजानाना अब्रुवन्नाजिमस्यायामहै स यो न उज्जेष्यति तस्येदम्भविष्यतीति तेऽग्नेरेवाधि गृहपतेरादित्यं काष्ठामकुर्वत तस्मादाग्नेयी प्रतिपद्भवत्याश्विनस्याग्निर्होता गृहपतिः स राजेति तद्धैक आहुरग्निम्मन्ये पितरमग्निमापिमित्येतया प्रतिपद्येत दिवि शुक्रं यजतं सूर्यस्येति प्रथमयैव ऋृचा काष्ठामाप्नोतीति तत्तन्नादृत्यं य एनं तत्र ब्रूयादग्निमग्निमिति वै प्रत्यपाद्यग्निमापत्स्यतीति शश्वत्तथा स्यात्तस्मादग्निर्होता गृहपतिः स राजेत्येतयैव प्रतिपद्येत गृहपतिवती प्रजातिमती शान्ता सर्वायुः सर्वायुत्वाय सर्वमायुरेति य एवं वेद ७

तासां वै देवतानामाजिं धावन्तीनामभिसृष्टानामग्निर्मुखम्प्रथमः प्रत्यपद्यत तमश्विनावन्वागछतां तमब्रूतामपोदिह्यावां वा इदं जेष्याव इति स तथेत्यब्रवीत्तस्य वै ममेहाप्यस्त्विति तथेति तस्मा अप्यत्राकुरुतां तस्मादाग्नेयमाश्विने शस्यते ता उषसमन्वागछतां तामब्रूतामपोदिह्यावां वा इदं जेष्याव इति सा तथेत्यब्रवीत्तस्यै वै ममेहाप्यस्त्विति तथेति तस्या अप्यत्राकुरुतां तस्मा-

दुषस्यमाश्विने शस्यते ताविन्द्रमन्वागछतां तमब्रूतामावां वा इदम्मघवञ्जेष्याव इति न ह तं दधृषतुरपोदिहीति वक्तुं स तथेत्यब्रवीत्तस्य वै ममेहाप्यस्त्विति तथेति तस्मा अप्यत्राकुरुतां तस्मादैन्द्रमाश्विने शस्यते तदश्विना उदजयतामश्विनावाश्नुवातां यदश्विना उदजयतामश्विनावाश्नुवातां तस्मादेतदाश्विनमित्याचक्षतेऽश्नुते यद्यत्कामयते य एवं वेद तदाहुर्यच्छस्यत आग्नेयं शस्यत उषस्यम्शस्यत ऐन्द्रमथ कस्मादेतदाश्विनमित्याचक्षत इत्यश्विनौ हि तदुदजयतामश्विनावाश्नुवातां यदश्विना उदजयतामश्विनावाश्नुवातां तस्मादेतदाश्विनमित्याचक्षतेऽश्नुते यद्यत्कामयते य एवं वेद ८

अश्वतरीरथेनाग्निराजिमधावत्तासाम्प्राजमानो योनिमकूळयत्तस्मात्ता न विजायन्ते गोभिररुणैरुषा आजिमधावत्तस्मादुषस्यागतायामरुणमिवैव प्रभात्युषसो रूपमश्वरथेनेन्द्र आजिमधावत्तस्मात्स उच्चैर्घोष उपब्दिमान्क्षत्रस्य रूपमैन्द्रो हि स गर्दभरथेनाश्विना उदजयतामश्विनावाश्नुवातां यदश्विना उदजयतामश्विनावाश्नुवातां तस्मात्स सृतजवो दुग्धदोहः सर्वेषामेतर्हि वाहनानामनाशिष्ठो रेतसस्त्वस्य वीर्यं नाहरतां तस्मात्स द्विरेता वाजी तदाहुः सप्त सौर्याणि छन्दांसि शंसेद्यथैवाग्नेयं यथोषस्यं यथाश्विनं सप्त व देवलोकाः सर्वेषु देवलोकेषु राध्नोतीति तत्तन्नादृत्यं त्रीण्येव शंसेत्त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानामभिजित्यै तदाहुरुदु त्यं जातवेदसमिति सौर्याणि प्रतिपद्येतेति तत्तन्नादृत्यं यथैव गत्वा काष्ठामपराध्नुयात्तादृक्तत्सूर्यो नो दिवस्पात्वित्येतेनैव प्रतिपद्येत यथैव गत्वा काष्ठामभिपद्येत तादृक्तदुदु त्यं जातवेदसमिति द्वितीयं शंसति चित्रं देवानामुदगादनीकमिति त्रैष्टुभमसौ वाव चित्रं देवानामुदेति तस्मादेतच्छंसति नमो मित्रस्य वरुणस्य चक्षस इति जागतं तद्वाशीःपदमाशिषमेवैतेनाशास्त आत्मने च यजमानाय च ९

तदाहुः सूर्यो नातिशस्यो बृहती नातिसस्या यत्सूर्यमतिशंसेद्ब्रह्मवर्चसमतिपद्येत यद्बृहतीमतिशंसेत्प्राणानतिपद्येतेतीन्द्र क्रतुं न आ भरेत्यैन्द्रम्प्रगाथं शंसति शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहीत्यसौ वाव ज्योतिस्तेन सूर्यं नातिशंसति यदु बार्हतः प्रगाथस्तेन बृहतीं नातिशंसत्यभि त्वा शूर नोनुम इति राथंतरीं योनिं शंसति राथंतरेण वै संधिनाश्विनाय स्तुवते तद्यद्राथांतारीं योनिं शंसति रथंतरस्यैव सयोनित्वायेशानमस्य जगतः

स्वर्दृशमित्यसौ वाव स्वर्दृक्तेन सूर्यं नातिशंसति यदु बार्हतः प्रगाथस्तेन बृहतीं नातिशंसति बहवः सूरचक्षस इति मैत्रावरुणम्प्रगाथं शंसत्यहर्वै मित्रो रात्रिर्वरुण उभे वा एषोऽहोरात्रे आरभते योऽतिरात्रमुपैति तद्यन्मैत्रावरुणम्प्रगाथं शंसत्यहोरात्रयोरेवैनं तत्प्रतिष्ठापयति सूरचक्षस इति तेन सूर्यं नातिशंसति यदु बार्हतः प्रगाथस्तेन बृहतीं नातिशंसति मही द्यौः पृथिवी च नस्ते हि द्यावापृथिवि विश्वशम्भुवेति द्यावापृथिवीये शंसति द्यावापृथिवी वै प्रतिष्ठे इयमेवेह प्रतिष्ठासावमुत्र तद्यद्द्यावापृथिवीये शंसति प्रतिष्ठयोरेवैनं तत्प्रतिष्ठापयति देवो देवी धर्मणा सूर्यः शुचिरिति तेन सूर्यं नातिशंसति यदु गायत्री च जगती च ते द्वे बृहत्यौ तेन बृहतीं नातिशंसति विश्वस्य देवी मृचयस्य जन्मनो न या रोषाति न ग्रभदिति द्विपदाम्शंसति चितैधमुक्थमिति ह स्म वा एतदाचक्षते यदेतदाश्विनं निर्ऋतिर्ह स्म पाशिन्युपास्ते यदैव होता परिधा-स्यत्यथ पाशान्प्रतिमोक्ष्यामीति ततो वा एताम्बृहस्पतिर्द्विपदामपश्यन्ना य रोषाति न ग्रभदिति तया निर्ऋत्याः पाशिन्या अधराचः पाशानपास्यत्तद्यदेतं द्विपदां होता शंसति निर्ऋत्या एव तत्पाशिन्या अधराचः पासानपास्यति स्वस्त्येव होतोन्मुच्यते सर्वायुः सर्वायुत्वाय सर्वमायुरेति य एवं वेद मृचयस्य जन्मन इत्यसौ वाव मर्चयतीव तेन सूर्यं नातिशंसति यदु द्विपदा पुरुषछन्दसं सा सर्वाणि छन्दांस्यभ्याप्ता तेन बृहतीं नातिशंसति १०

ब्राह्मणस्पत्यया परिदधाति ब्रह्म वै बृहस्पतिर्ब्रह्मण्येवैनं तदन्ततः प्रतिष्ठा-पयत्येवा पित्रे विश्वदेवाय वृष्ण इत्येतया परिदध्यात्प्रजाकामः पशुकामो बृहस्पते सुप्रजा वीरवन्त इति प्रजया वै सुप्रजा वीरवान्वयं स्याम पतयो रयीणामिति प्रजावान्पशुमान्रयिमान्वीरवान्भवति यत्रैवं विद्वानेतया परिद-धाति बृहस्पते अति यदर्यो अर्हादित्येतया परिदध्यात्तेजस्कामो ब्रह्मवर्च-सकामोऽतीव वान्यान्ब्रह्मवर्चसमर्हति द्युमदिति द्युमदिव वै ब्रह्मवर्चसं विभातीति वीव वै ब्रह्मवर्चसम्भाति यद्दीदयच्छवस ऋतप्रजातेति दीदायेव वै ब्रह्मवर्चसं तदस्मासु द्रविणं धेहि चित्रमिति चित्रमिव वै ब्रह्म-वर्चसम्ब्रह्मवर्चसी ब्रह्मयशसी भवति यत्रैवं विद्वानेतया परिदधाति तस्मादेवं विद्वानेतयैव परिदध्याद्ब्राह्मणस्पत्या तेन सूर्यं नातिसंसति यदु त्रिष्टुभं त्रिः शंसति सा सर्वाणि छन्दांस्यभ्याप्ता तेन बृहतीं नातिशंसति गायत्र्या च त्रिष्टुभा च वषट्कुर्याद्ब्रह्म वै गायत्री वीर्यम्त्रिष्टुब्ब्रह्मणैव तद्वीर्यं संदधाति

ब्रह्मवर्चसी ब्रह्मयशसी वीर्यवान्भवति यत्रैवं विद्वान्गायत्र्या च त्रिष्टुभा च वषट्करोत्यश्विना वायुना युवं सुदक्षो भा पिबतमश्विनेति गायत्र्या च विराजा च वषट्कुर्याद्ब्रह्म वै गायत्र्यन्नं विराद्ब्रह्मणैव तदन्नाद्यं संदधाति ब्रह्मवर्चसी ब्रह्मयशसी भवति ब्रह्माद्यमन्नमत्ति यत्रैवं विद्वान्गायत्र्या च विराजा च वषट्करोति तस्मादेवं विद्वान्गायत्र्या चैव विराजा च वषट्कुर्यात्प्र वामन्धांसि मद्यान्यस्थुरुभा पिबतमश्विनेत्येताभ्याम् ११

चतुर्विंशमेतदहरुपयन्त्यारम्भणीयमेतेन वै संवत्सरमारभन्त एतेन स्तोमांश्च छन्दांसि चैतेन सर्वा देवता अनारब्धं वै तच्छन्दोऽनारब्धा सा देवता यदेतस्मिन्नहनि नारभन्ते तदारम्भणीयस्यारम्भणीयत्वं चतुर्विंशः स्तोमो भवति तच्चतुर्विंशस्य चतुर्विंशत्वं चतुर्विंशतिर्वा अर्धमासा अर्धमासश एव तत्संव-त्सरमारभन्त उक्थ्यो भवति पशवो वा उक्थानि पशूनामवरुद्ध्यै तस्य पञ्चदश स्तोत्राणि भवन्ति पञ्चदश शस्त्रानि स मासो मासश एव तत्संवत्सरमारभन्ते तस्य षष्टिश्च त्रीणि च शतानि स्तोत्रियास्तावन्ति संवत्सरस्याहान्यहश्श एव तत्संवत्सरमारभन्तेऽग्निष्टोम एतदहः स्यादित्याहुरग्निष्टोमो वै संवत्सरो न वा एतदन्योऽग्निष्टोमादहर्दाधारा न विव्याचेति स यद्यग्निष्टोमः स्यादष्टाच-त्वारिंशास्त्रयः पवमानाः स्युश्चतुर्विंशानीतराणि स्तोत्राणि तदु षष्टिश्चैव त्रीणि च शतानि स्तोत्रियास्तावन्ति संवत्सरस्याहान्यहश्श एव तत्संवत्सरमारभन्त उक्थ्य एव स्यात्पशुसमृद्धो यज्ञः पशुसमृद्धं सत्रं सर्वाणि चतुर्विंशानि स्तोत्राणि प्रत्यक्षाद्ध्येतदहश्चतुर्विंशं तस्मादुक्थ्य एव स्यात् १२

बृहद्रथंतरे सामनी भवत एते वै यज्ञस्य नावौ सम्पारिण्यौ यद्बृहद्रथंतरे ताभ्यामेव तत्संवत्सरं तरन्ति पादौ वै बृहद्रथंतरे शिर एतदहः पादाभ्यामेव तच्छ्रियं शिरोऽभ्यायन्ति पक्षौ वै बृहद्रथंतरे शिर एतदहः पक्षाभ्यामेव तच्छ्रियं शिरोऽभ्यायुवते ते उभे न समवसृज्ये य उभे समवसृजेयुर्यथैव छिन्ना नौर्बन्धनात्तीरं-तीरमृछन्ति प्लवेतैवमेव ते सत्रिणस्तीरंतीरमृछन्तः प्लवेरन्य उभे समवसृजेयुस्तद्यदि रथंतरमवसृजेयुर्बृहतैवोभे अनवसृष्टे अथ यदि बृहदवसृजेयू रथंतरेणैवोभे अनवसृष्टे यद्वै रथंतरं तद्वैरूपं यद्बृहत्तद्वैराजम्यद्रथंतरं तच्छाक्वरं यद्बृहत्तद्रैवतमेवमेते उभे अनवसृष्टे भवतो ये वा एवं विद्वांस एतदहरुपयन्त्याप्त्वा वै तेऽहश्शः संवत्सरमाप्त्वार्धमासश आप्त्वा मासश

आप्त्वा स्तोमांश्च छन्दांसि चाप्त्वा सर्वा देवतास्तप एव तप्यमानाः सोमपीथम्भक्षयन्तः संवत्सरमभिषुरावन्त आसते ये वा अत ऊर्ध्वं संवत्सरमुपयन्ति गुरुं वै ते भारमभिनिदधते सं वै गुरुर्भारः शृणात्यथ य एनम्परस्तात्कर्मभिराप्त्वावस्तादुपैति स वै स्वस्ति संवत्सरस्य पारमश्नुते १३

यद्वै चतुर्विंशं तन्महाव्रतम्बृहद्दिवेनात्र होता रेतः सिञ्चति तददो महाव्रतीयेनाह्ना प्रजनयति संवत्सरेसंवत्सरे वै रेतः सिक्तं जायते तस्मात्समानम्बृहद्दिवो निष्केवल्यम्भवत्येष ह वा एनम्परस्तात्कर्मभिराप्त्वावस्तादुपैति य एवं विद्वानेतदहरुपैति स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद यो वै संवत्सरस्यावारं च पारं च वेद स वै स्वस्ति संवत्सरस्य पारमश्नुतेऽतिरात्रो वा अस्य प्रायणीयोऽवारमुदयनीयः पारं स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद यो वै संवत्सरस्यावरोधनं चोद्रोधनं च वेद स वै स्वस्ति सम्वत्सरस्य पारमश्नुतेऽतिरात्रो वा अस्य प्रायणीयोऽवरोधनमुदयनीय उद्रोधनं स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद यो वै संवत्सरस्य प्राणोदानौ वेद स वै स्वस्ति संवत्सरस्य पारमश्नुतेऽतिरात्रो वा अस्य प्रायणीयः प्राण उदान उदयनीयः स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद य एवं वेद १४ २

अध्याय १८ खराडः १-८

ज्योतिर्गौरायुरिति स्तोमेभिर्यन्त्ययं वै लोको ज्योतिरन्तरिक्षं गौरसौ लोक आयुः स एवैष उत्तरस्त्र्यहो ज्योतिर्गौरायुरिति त्रीरायहानि गौरायुर्ज्योतिरिति त्रीरययं वै लोको ज्योतिरसौ लोको ज्योतिस्ते एते ज्योतिषी उभयतः संलोकेते तेनैतेनोभयतोज्योतिषा षळहेन यन्ति तद्यदेतेनोभयतोज्योतिषा षळहेन यन्त्यनयोरेव तल्लोकयोरुभयतः प्रतितिष्ठन्तो यन्त्यस्मिंश्च लोकेऽमुष्मिंश्चोभयोः परियद्वा एतद्देवचक्रं यदभिप्लवः षळहस्तस्य यावभितोऽग्निष्टोमौ तौ प्रधी ये चत्वारो मध्य उक्थ्यास्तन्नभ्यं गछति वै वर्तमानेन यत्र कामयते तत्स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद यो वै तद्वेद यत्प्रथमः षळहः स वै स्वस्ति संवत्सरस्य पारमश्नुते यस्तद्वेद यद्द्वितीयो यस्तद्वेद यत्तृतीयो यस्तद्वेद यच्चतुर्थो यस्तद्वेद यत्पञ्चमः १५

प्रथमं षळहमुपयन्ति षळ् अहानि भवन्ति षड्वा ऋतव ऋतुश एव

तत्संवत्सरमाप्नुवन्त्यृतुशान्संवत्सरे प्रतितिष्ठन्तो यन्ति द्वितीयं षळहमुपयन्ति द्वादशाहानि भवन्ति द्वादश वै मासा मासश एव तत्संवत्सरमाप्नुवन्ति मासशः संवत्सरे प्रतितिष्ठन्तो यन्ति तृतीयं षळहमुपयन्त्यष्टादशाहानि भवन्ति तानि द्वेधा नवान्यानि नवान्यानि नव वै प्राणा नव स्वर्गा लोकाः प्राणांश्चैव तत्स्वर्गांश्च लोकानाप्नुवन्ति प्राणेषु चैव तत्स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति चतुर्थं षळहमुपयन्ति चतुर्विंशतिरहानि भवन्ति चतुर्विंशतिर्वा अर्धमासा अर्धमासश एव तत्संवत्सरमाप्नुवन्त्यर्धमाशशः संवत्सरे प्रतितिष्ठन्तो यन्ति पञ्चमं षळहमुपयन्ति त्रिंशदहानि भवन्ति त्रिंशदक्षरा वै विराड्विराळ् अन्नाद्यं विराजमेव तन्मासिमास्यभिसम्पादयन्तो यन्त्यन्नाद्याकामाः खलु वै सात्रमासत तद्यद्विराजम्मासिमास्यभिसम्पादयन्तो यन्त्यन्नाद्यमेव तन्मासिमास्यवरुन्धाना यन्त्यस्मै च लोकायामुष्मै चोभाभ्याम् १६

गवामयनेन यन्ति गावो वा आदित्या आदित्यानामेव तदयनेन यन्ति गावो वै सत्रमासत शफाञ्छृङ्गाणि सिषासन्त्यस्तासां दशमे मासि शफाः शृङ्गाण्यजायन्त ता अब्रुवन्यस्मै कामायादीक्षामह्यापाम तमुत्तिष्ठामेति ता या उदतिष्ठंस्ता एताः शृङ्गिण्योऽथ याः समापयिष्यामः संवत्सरमित्यासत तासामश्रद्धया शृङ्गाणि प्रावर्तन्त ता एतास्तूपरा ऊर्जं त्वसुन्वंस्तस्मादु ताः सर्वानृतून्प्राप्त्वोत्तरमुत्तिष्ठन्त्यूर्जं ह्यसुन्वन्सर्वस्य वै गावः प्रेमाणं सर्वस्य चारुतां गताः सर्वस्य प्रेमाणं सर्वस्य चारुतां गछति य एवं वेदादित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोकेऽस्पर्धन्त वयम्पूर्व एष्यामो वयमिति ते हादित्याः पूर्वे स्वर्गं लोकं जग्मुः पश्चेवाङ्गिरसः षष्ट्यां वा वर्षेषु यथा वा प्रायणीयोऽतिरात्रश्चतुर्विंश उक्थ्यः सर्वेऽभिप्लवाः षळहा आद्यन्त्यन्यान्यहानि तदादित्यानामयनम्प्रायणीयोऽतिरात्रश्चतुर्विंश उक्थ्यः सर्वे पृष्ठ्याः षळहा आद्यन्त्यन्यान्यहानि तदङ्गिरसामयनं सा यथा स्रुतिरञ्जसायन्येवमभिप्लवः षळहः स्वर्गस्य लोकस्याथ यथा महापथः पर्याण एवम्पृष्ठ्यः षळहः स्वर्गस्य लोकस्य तद्यदुभाभ्यां यन्त्युभाभ्यां वै यन्न रिष्यत्युभयोः कामयोरुपाप्त्यै यश्चाभिप्लवे षळहे यश्च पृष्ठ्ये १७

एकविंशमेतदहरुपयन्ति विषुवन्तम्मध्ये संवत्सरस्यैतेन वै देवा एकविंशेनादित्यं स्वार्गय लोकायोदयछन्स एष इत एकविंशस्तस्य दशावस्तादहानि

दिवाकीर्त्यस्य भवन्ति दश परस्तान्मध्य एष एकविंश उभयतो विराजि प्रतिष्ठित उभयतो हि वा एष विराजि प्रतिष्ठितस्तस्मादेषोऽन्तरेमाँल्लोकान्यन्न व्यथते तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैरवस्तात्प्रत्युत्तभ्नुवन्स्तोमा वै त्रयः स्वर्गा लोकास्तस्य पराचोऽतिपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैः परस्तात्प्रत्यस्तभ्नुवन्स्तोमा वै त्रयः स्वर्गा लोकास्तत्त्रयोऽवस्तात्सप्तदशा भवन्ति त्रयाः परस्तान्मध्य एष एकविंश उभयतः स्वरसामभिर्धृत उभयतो हि वा एष स्वरसामभिर्धृतस्तस्मादेषोऽन्तरेमाँल्लोकान्यन्न व्यथते तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तम्परमैः स्वर्गैर्लोकैरवस्तात्प्रत्युत्तभ्नुवन्स्तोमा वै परमाः स्वर्गा लोकास्तस्य पराचोऽतिपातादबिभयुस्तम्परमैः स्वर्गैर्लोकैः परस्तात्प्रत्यस्तभ्नुवन्स्तोमा वै परमाः स्वर्गा लोकास्तत्त्रयोऽवस्तात्सप्तदशा भवन्ति त्रयः परस्तात्ते द्वौद्वौ सम्पद्य त्रयश्चतुस्त्रिंशा भवन्ति चतुस्त्रिंशो वै स्तोमानामुत्तमस्तेषु वा एष एतदध्याहितस्तपति तेषु हि वा एष एतदध्याहितस्तपति स वा एष उत्तरोऽस्मात्सर्वस्माद्भूताद्भविष्यतः सर्वमेवेदमतिरोचते यदिदं किंचोत्तरो भवति यस्मादुत्तरो बुभूषति तस्मादुत्तरो भवति य एवं वेद १८

स्वरसाम्न उपयन्तीमे वै लोकाः स्वरसामान इमान्वै लोकान्स्वरसामभिरस्पृणवंस्तत्स्वरसाम्नां स्वरसामत्वं तद्यत्स्वरसाम्न उपयन्त्येष्वेवैनं तल्लोकेष्वाभजन्ति तेषां वै देवाः सप्तदशानाम्प्रव्लयादबिभयुः समा इव वै स्तोमा अविगूळ्हा इवेमे ह न प्रव्लियेरन्निति तान्सर्वैः स्तोमैरवस्तात्पर्यार्षन्सर्वैः पृष्ठैः परस्तात्तद्यदभिजित्सर्वस्तोमोऽवस्ताद्भवति विश्वजित्सर्वपृष्ठः परस्तात्तत्सप्तदशानुभयतः पर्यृषन्ति धृत्या अप्रव्लयाय तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तम्पञ्चभी रश्मिभिरुदवयन्रश्मयो वै दिवाकीर्त्यानि महादिवाकिर्त्यम्पृष्ठम्भवति विकर्णम्ब्रह्मसाम भासमग्निष्टोमसामोभे बृहद्रथंतरे पवमानयोर्भवतस्तदादित्यम्पञ्चभी रश्मिभिरुद्वयन्ति धृत्या अनवपातायोदित आदित्ये प्रातरनुवाकमनुब्रूयात्सर्वं ह्येवैतदहर्दिवाकीर्त्यम्भवति सौर्यम्पशुमन्यङश्वेतं सवनियस्योपालम्भ्यमालभेरन्सूर्यदेवत्यं ह्येतदहरेकविंशतिं सामिधेनीरनुब्रूयात्प्रत्यक्षाद्ध्येतदहरेकविंशमेकपञ्चाशतं द्विपञ्चाशतं वा शस्त्वा मध्ये निविदं दधाति तावतीरुत्तराः शङ्सति शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय आयुष्येवैनं तद्वीर्य इन्द्रिये दधाति १९

दूरोहणं रोहति स्वर्गो वै लोको दूरोहाणं स्वर्गमेव तल्लोकं रोहति य एवं वेद यदेव दूरोहणाम् असौ वै दूरोहो योऽसौ तापति कश्चिद्वा अत्र गछति स यद्दूरोहणं रोहत्येतमेव तद्रोहति हंसवत्या रोहति हंसः शुचिषदित्येष वै हंसः शुचिषद्वसुरन्तरिक्षसदित्येष वै वसुरन्तरिक्षसद्धोता वेदिषदित्येष वै होता वेदिषदतिथिर्दुरोणसदित्येष वा अतिथिर्दुरोणसन्नृषदित्येष वै नृषद्वरसदित्येष वै वरसद्वरं वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपत्यृतसदित्येष वै सत्य-सद्व्योमसदित्येष वै व्योमसद्व्योम वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपत्यब्जा इत्येष वा अब्जा अद्भ्यो वा एषा प्रातरुदेत्यपः सायम्प्रविशति गोला इत्येष वै गोजा ऋताजा इत्येष वै सत्यजा अद्रिजा इत्येष वा अद्रिजा ऋतमित्येष वै सत्यमेष एतानि सर्वाण्येषा ह वा अस्य छन्दस्सु प्रत्यक्षतमादिव रूपं तस्माद्यत्र क्व च दूरोहणं रोहेद्धंसवत्यैव रोहेत्तार्क्ष्ये स्वर्गकामस्य रोहेत्तार्क्ष्यो ह वा एतम्पूर्वोऽध्वानमैद्यत्रादो गायत्री सुपर्णो भूत्व सोमामाहरत्तद्यथा क्षेत्रज्ञमध्वनः पुरएतारं कुर्वीत तादृक्तद्यदेव तार्क्ष्येऽयं वै तार्क्ष्यो योऽयम्पवत एष स्वर्गस्य लोकस्याभिवोळ्हा त्यमू षु वाजिनं देवजूतमित्येष वै वाजी देवजूतः सहावानं तरुतारं रथानामित्येष वै सहावांस्तरुतैष हीमाँल्लोकान्सद्यस्तरत्यरिष्टनेमि-म्पृतनाजमाशुमित्येष व अरिष्टनेमिः पृतनाजिदाशुः स्वस्तय इति स्वस्तितामाशास्ते तार्क्ष्यमिहा हुवेमेति ह्वयत्येवैनमेतदिन्द्रस्येव रातिमाजो-हुवानाः स्वस्तय इति स्वस्तितामेवाशास्ते नावमिवा रुहेमेति समेवैनमेतद-धिरोहति स्वर्गस्य लोकस्य समष्ट्यै सम्पत्त्यै संगत्या उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषामेतीमे एवैतदनुमन्त्रयत आचपराचमेष्य-न्सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततानेति प्रत्यक्षं सूर्य-मभिवदति सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न श-र्यामित्याशिषमेवैतेनाशास्त आत्मने च यजमानेभ्यश्च २०

आहूय दूरोहणं रोहति स्वर्गो वै लोको दूरोहनं वागाहावो ब्रह्म वै वाक् स यदाह्वयते तद्ब्रह्मणाहावेन स्वर्गं लोकं रोहति स पच्छः प्रथमं रोहतीमं तल्लोकमाप्नोत्यथार्धर्चशोऽन्तरिक्षं तदाप्नोत्यथ त्रिपद्यामुं तल्लोकमाप्नोत्यथ केवल्या तदेतस्मिन्प्रतितिष्ठति य एष तपति त्रिपद्या प्रत्यवरोहति यथा शाखां धारयमाणस्तदमुष्मिँल्लोके प्रतितिष्ठत्यर्धर्चशोऽन्तरिक्षे पच्छोऽस्मिँल्लोक आप्त्वैव तत्स्वर्गं लोकं यजमाना अस्मिँल्लोके प्रतितिष्ठन्त्यथ य एककामाः

स्युः स्वर्गकामाः पराञ्चमेव तेषां रोहेत्ते जयेयुर्हैव स्वर्गं लोकं न त्वेवास्मिँल्लोके ज्योगिव वसेयुर्मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दांसि पशूनां अवरुद्ध्यै २१

यथा वै पुरुष एवं विषुवांस्तस्य यथा दक्षिणोऽर्ध एवम्पूर्वोऽर्धो विषुवतो यथोत्तरोऽर्ध एवमुत्तरोऽर्धो विषुवतस्तस्मादुत्तर इत्याचक्षते प्रबाहुक्सतः शिर एव विषुवान्बिदलसंहित इव वै पुरुषस्तद्धापि स्यूमेव मध्ये शीर्ष्णो विज्ञायते तदाहुर्विषुवत्येवैतदहः शंसेद्विषुवान्वा एतदुक्थानामुक्थं विषुवान्विषुवानिति ह विषुवन्तो भवन्ति श्रेष्ठतामश्नुवत इति तत्तन्नादृत्यं संवत्सर एव शंसेद्रेतो वा एतत्संवत्सरं दधतो यन्ति यानि वै पुरा संवत्सराद्रेतांसि जायन्ते यानि पञ्चमास्यानि यानि षरामास्यानि स्त्रीव्यन्ति वै तानि न वै तैर्भुञ्जतेऽथ यान्येव दशमास्यानि जायन्ते यानि सांवत्सरिकाणि तैर्भुञ्जते तस्मात्संवत्सर एवैतदहः शंसेत्संवत्सरो ह्येतदहराप्नोति संवत्सरं ह्येतदहराप्नुवन्त्येष ह वै संवत्सरेण पाप्मानमपहतैष विषुवताङ्गेभ्यो हैव मासैःपाप्मानमपहते शीर्ष्णो विषुवतप संवत्सरेण पाप्मानं हलेऽप विषुवत य एवं वेद वैश्वकर्मणमृषभं सवनीयस्योपालम्भ्यमालभेरन्द्विरूपमुभयत एतम्महाव्रतीयेऽहनीन्द्रो वै वृत्रं हत्व विश्वकर्माभवत्प्रजापतिः प्रजाः सृष्ट्वा विश्वकर्माभवत्संवत्सरो विश्व-कर्मेन्द्रमेव तदात्मानम्प्रजापतिं संवत्सरं विश्वकर्माणमाप्नुवन्तीन्द्र एव तदात्मनि प्रजापतौ संवत्सरे विश्वकर्मण्यन्ततः प्रतितिष्ठन्ति प्रतितिष्ठति य एवं वेद य एवं वेद २२ ३

## अध्याय १९ खण्डः १-६

प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति स तपोऽतप्यत स तपस्तप्त्वेमं द्वादशाहमपश्यदात्मन एवाङ्गेषु च प्राणेषु च तमात्मन एवाङ्गेभ्यश्च प्राणेभ्यश्च द्वादशधा निरमिमीत तमाहरत्तेनायजत ततो वै सोऽभवदात्मना प्र प्रजया पशुभिरजायत भवत्यात्मना प्र प्रजया पशुभिर्जायते य एवं वेद सोऽकामयत कथं नु गायत्र्या सर्वतो द्वादशाहम्परिभूय सर्वामृद्धिमृध्नुयामिति तं वै तेजसैव पुरस्तात्पर्यभवच्छन्दोभिर्मध्यतोऽक्षरैरुपरिष्टाद्गायत्र्या सर्वतो द्वादशाहम्परिभूय सर्वामृद्धिमार्ध्नोत्सर्वामृद्धिमृध्नोति य एवं वेद यो वै गायत्रीं पक्षिणीं चक्षुष्मतीं ज्योतिष्मतीम्भास्वतीं वेद गायत्र्या पक्षिण्या चक्षुष्मत्या ज्योतिष्मत्या

भास्वत्या स्वर्गं लोकमेत्येषा वै गायत्री पक्षिणी चक्षुष्मती ज्योतिष्मती भास्वती यद्द्वादशाहस्तस्य यावभितोऽतिरात्रौ तौ पक्षौ यावन्तराग्निष्टोमौ ते चक्षुषी येऽष्टौ मध्य उक्थ्याः स आत्मा गायत्र्या पक्षिरया चक्षुष्मत्या ज्योतिष्मत्या भास्वत्या स्वर्गं लोकमेति य एवं वेद २३

त्रयश्च वा एते त्र्यहा आ दशममहरा द्वावतिरात्रौ यद्द्वादशाहो द्वादशाहानि दीक्षितो भवति यज्ञिय एव तैर्भवति द्वादश रात्रीरुपसद उपैति शरीरमेव ताभिर्धूनुते द्वादशाहम्प्रसुतो भूत्वा शरीरं धूत्वा शुद्धः पूतो देवता अप्येति य एवं वेद षट्त्रिंशदहो वा एष यद्द्वादशाहः षट्त्रिंशदक्षरा वै बृहती बृहत्या वा एतदयनं यद्द्वादशाहो बृहत्या वै देवा इमाँल्लोकानाश्नुवत ते वै दशभिरेवाक्षरैरिमं लोकमाश्नुवत दशभिरन्तरिक्षम्दशभिर्दिवं चतुर्भिश्चतस्रो दिशो द्वाभ्यामेवास्मिँल्लोके प्रत्यतिष्ठन्प्रतितिष्ठति य एवं वेद तदाहुर्यदन्यानि छन्दांसि वर्षीयांसि भूयोऽक्षरतरारयथ कस्मादेताम्बृहतीत्याचक्षत इत्येतया हि देवा इमाँल्लोकानाश्नुवत ते वै दशभिरेवाक्षरैरिमं लोकमाश्नुवत दशभिरन्तरिक्षंशभिर्दिवं चतुर्भिश्चतस्रो दिशो द्वाभ्यामेवास्मिँल्लोके प्रत्यतिष्ठंस्तस्मादेताम्बृहतीत्याचक्षतेऽश्नुते यद्यत्कामयते य एवं वेद २४

प्राजापतियज्ञो वा एष यद्द्वादशाहः प्रजापतिर्वा एतेनाग्रेऽयजत द्वादशाहेन सोऽब्रवीदृतूंश्च मासांश्च याजयत मा द्वादशाहेनेति तं दीक्षयित्वानपक्रमं गमयित्वाब्रुवन्देहि नु नोऽथ त्वा याजयिष्याम इति तेभ्य इषमूर्जम्प्राय-छत्सैषोर्गृतुषु च मासेषु च निहिता ददतं वै ते तमयाजयंस्तस्माद्ददद्याज्यः प्रतिगृह्णन्तो वै ते तमयाजयंस्तस्मात्प्रतिगृह्णता याज्यमुभये राध्नुवन्ति य एवं विद्वांसो यजन्ते च याजयन्ति च ते वा इम ऋतवश्च मासाश्च गुरव इवामन्यन्त द्वादशाहे प्रतिगृह्य तेऽब्रुवन्प्रजापतिं याजय नो द्वादशाहेनेति स तथेत्यब्रवीत्ते वै दीक्षध्वमिति ते पूर्वपक्षाः पूर्वे दीक्षन्त ते पाप्मानमपाहत तस्मात्ते दिवेव दिवेव ह्यपहतपाप्मानोऽपरपक्षा अपरेऽदीक्षन्त ते नतराम्पाप्मानमपाहत तस्मात्ते तम इव तम इव ह्यनपहतपाप्मानस्तस्मादेवं विद्वान्दीक्षमारोषु पूर्वः-पूर्व एव दिदीक्षिषेता प पाप्मानं हते य एवं वेद स वा अयम्प्रजापतिः संवत्सर ऋतुषु च मासेषु च प्रत्यतिष्ठत्ते वा इम ऋतवश्च मासाश्च प्रजापतावेव संवत्सरे प्रत्यतिष्ठंस्त एतेऽन्योन्यस्मिन्प्रतिष्ठिता एवं ह वाव स ऋत्विजि प्रतितिष्ठति यो

द्वादशाहेन यजते तस्मादाहुर्न पापः पुरुषो याज्यो द्वादशाहेन नेदयम्मयि प्रतितिष्ठादिति ज्येष्वहयज्ञो वा एष यद्द्वादशाहः स वै देवानां ज्येष्ठो य एतेनाग्रेऽयजत श्रेष्ठयज्ञो वा एष यद्द्वादशाहः स वै देवानां श्रेष्ठो य एतेनाग्रेऽयजत ज्येष्ठः श्रेष्ठो यजेत कल्याणीह समा भवति न पापः पुरुषो याज्यो द्वादशाहेन नेदयम्मयि प्रतितिष्ठदितीन्द्राय वै देव ज्यैष्ठ्याय श्रैष्ठ्याय नातिष्ठन्त सोऽब्रवीद्बृहस्पतिं याजय मा द्वादशाहेनेति तमयाजयत्तलो वै तस्मै देवा ज्यैष्ठ्याय श्रैष्ठ्यायातिष्ठन्त तिष्ठन्तेऽस्मै स्वा ज्यैष्ठ्याय श्रैष्ठ्याय समस्मिन्स्वाः श्रेष्ठतायां जानते य एवं वेदोर्ध्वो वै प्रथमस्त्र्यहस्तिर्यङ्मध्यमोऽर्वाङुत्तमः स यदूर्ध्वः प्रथमस्त्र्यहस्तस्मादयमग्निरूर्ध्व उद्दीप्यत ऊर्ध्वा ह्येतस्य दिग् यत्तिर्यङ्मध्यमस्तस्मादयं वायुस्तिर्यङ्पवते तिरश्चीरापो वहन्ति तिरश्ची ह्येतस्य दिग् यदर्वाङुत्तमस्तस्मादसाववर्वाङ्तपत्यर्वाङ्वर्षत्यर्वाञ्चि नक्षत्राण्यार्वाचि ह्येतस्य दिक् सम्यञ्चो वा इमे लोकाः सम्यञ्च एते त्र्यहाः सम्यञ्चोऽस्मा इमे लोकाः श्रियै दीद्यति य एवं वेद २५

दीक्षा वै देवेभ्योऽपाक्रामत्तां वासन्तिकाभ्याम्मासाभ्यामन्वयुञ्जत तां वासन्तिकाभ्याम्मासाभ्यां नोदाप्नुवंस्तां ग्रैष्माभ्यां तां वार्षिकाभ्यां तां शारदाभ्यां तां हैमन्तिकाभ्याम्मासाभ्यामन्वयुञ्जत तां हैमन्तिकाभ्याम्मासाभ्यां नोदाप्नुवंस्तां शैशिराभ्याम्मास्राभ्यामन्वयुञ्जत तां शैशिराभ्याम्मासाभ्यामाप्नुवन्नाप्नोति यमीप्सति नैनं द्विषन्नाप्नोति य एवं वेद तस्माद्यं सत्रिया दीक्षोपनमेदेतयोरेव शैशिरयोर्मासयोरागतयोर्दीक्षेत साक्षादेव तद्दीक्षायामागतायाम्दीक्षते प्रत्यक्षाद्दीक्षाम्परिगृह्णाति तस्मादेतयोरेव शैशिरयोर्मासयोरागतयोर्ये चैव ग्राम्याः पशवो ये चारण्या अणिमानमेव तत्परुषिमाणं नियन्ति दीक्षारूपमेव तदुपनिप्लवन्ते स पुरस्ताद्दीक्षायाः प्राजापत्यम्पशुमालभते तस्य सप्तदश सामिधेनीरनुब्रूयात्सप्तदशो वै प्रजापतिः प्रजापतेराप्त्यै तस्याप्रियो जामदग्न्यो भवन्ति तदाहुर्यदन्येषु पशुषु यथऋष्याप्रियो भवन्त्यथ कस्मादस्मिन्सर्वेषां जामदग्न्य एवेति सर्वरूपा वै जामदग्न्यः सर्वसमृद्धाः सर्वरूप एष पशुः सर्वसमृद्धस्तद्यज्जामदग्न्यो भवन्ति सर्वरूपतायै सर्वसमृद्ध्यै तस्य वायव्यः पशुपुरोळाशो भवति तदाहुर्यदन्यदेवत्य उत पशुर्भवत्यथ कस्माद्वायव्यः पशुपुरोळाशः क्रियत इति प्रजापतिर्वै यज्ञो यज्ञस्यायातयामताया इति ब्रूयाद्यदु वायव्यस्तेन प्रजापतेर्नैति वायुर्ह्येव प्रजापति-

स्तदुक्तमृषिणा पवमानः प्रजापतिरिति सत्रमु चेत्संन्युप्याग्नीन्यजेरन्सर्वे दीक्षेरन्सर्वे सुनुयुर्वसन्तमभ्युदवस्यत्यूर्ग्वै वसन्त इषमेव तदूर्जमभ्युदवस्यति २६

छन्दांसि वा अन्योन्यस्यायतनमभ्यध्यायन्गायत्री त्रिष्टुभश्च जगत्यै चायतनमभ्यध्यायत्त्रिष्टुब्गायत्र्यै च जगत्यै च जगती गायत्र्यै च त्रिष्टुभश्च ततो वा एतम्प्रजापतिर्व्यूळ्हछन्दसं द्वादशाहमपश्यत्तमाहरत्तेनायजत तेन स सर्वान्कामांश्छन्दांस्यगमयत्सर्वान्कामान्गछति य एवं वेद छन्दांसि व्यूहत्ययातयामतायै छन्दांस्येव व्यूहति तद्यथादोऽश्वैर्वानळुद्भिर्वान्यैरन्यैरश्रान्ततरैरश्रान्ततरैरुपविमोकं यान्त्येवमेवैतच्छन्दोभिरन्यैरन्यैरश्रान्ततरैरश्रान्ततरैरुपविमोकं स्वर्गं लोकम्यन्ति यच्छन्दांसि व्यूहतीमौ वै लोकौ सहास्तां तौ व्यैतां नावर्षन्न समतपत्ते पञ्चजना न समजानत तौ देवाः समनयंस्तौ संयन्तावेतं देवविवाहं व्यवहेतां रथंतरेणैवेयममूं जिन्वति बृहतासाविमां नौधसेनैवेयममूं जिन्वति श्यैतेनासाविमां धूमेनैवेयममूं जिन्वति वृष्ट्यासाविमां देवयजनमेवेयममुष्यामदधात्पशूनसावस्यामेतद्वा इयममुष्यां देवयजनमदधाद्यदेतच्चन्द्रमसि कृष्णमिव तस्मादापूर्यमाणपक्षेषु यजन्त एतदेवोपेप्सन्त ऊषानसावस्यां तद्धापि तुरःकावषेय उवाचोषः पोषो जनमेजयकेति तस्माद्धाप्येतर्हि गव्यम्मीमांसमानाः पृछन्ति सन्ति तत्रोषाः इति ऊषो हि पोषोऽसौ वै लोक इमं लोकमभिपर्यावर्तत ततो वै द्यावापृथिवी अभवतां न द्यावान्तरिक्षान्नान्तरिक्षाद्भूमिः २७

बृहच्च वा इदमग्रे रथंतरं चास्तां वाक्च वै तन्मनश्चास्तां वाग्वै रथंतरम्मनो बृहत्तद्बृहत्पूर्वं ससृजानं रथंतरमत्यमन्यत तद्रथंतरं गर्भमधत्त तद्वैरूपमसृजत ते द्वे भूत्वा रथंतरं च वैरूपं च बृहदत्यमन्येतां तद्बृहद्गर्भमधत्त तद्वैराजमसृजत ते द्वे भूत्वा बृहच्च वैराजं च रथंतरं च वैरूपम्चात्यमन्येतां तद्रथंतरं गर्भमधत्त तच्छाक्वरमसृजत तानि त्रीणि भूत्व रथंतरं च वैरूपम्च शाक्वरं च बृहच्च वैराजं चात्यमन्यन्त तद्बृहद्गर्भमधत्त तद्रैवतमसृजत तानि त्रीण्यन्यानि त्रीण्यन्यानि षट्पृष्ठान्यासंस्तानि ह तर्हि त्रीणि छन्दांसि षट्पृष्ठानि नोदाप्नुवन्सा गायत्री गर्भमधत्त सानुष्टुभमसृजत त्रिष्टुब्गर्भमधत्त सा पन्क्तिमसृजत जगती गर्भमधत्त सातिछन्दसमसृजत तानि त्रीण्यन्यानि त्रीण्यन्यानि षट्छन्दांस्यासन्षट्पृष्ठानि तानि तथाकल्पन्त कल्पते यज्ञोऽपि तस्यै जनतायै कल्पते

यत्रैवमेतां छन्दसां च पृष्ठानां च कॢप्तिं विद्वान्दीक्षते दीक्षते २८ ४

अध्याय २० खण्डः १-४

अग्निर्वै देवता प्रथममहर्वहति त्रिवृत्स्तोमो रथंतरं साम गायत्री छन्दो यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद यद्वा एति च प्रेति च तत्प्रथमस्याह्नो रूपं यद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्रथमे पदे देवता निरुच्यते यदयं लोकोऽभ्युदितो यद्राथंतरं यद्गायत्रं यत्करिष्यदेतानि वै प्रथमस्याह्नो रूपाण्युपप्रयन्तो अध्वरमिति प्रथमस्याह्न आज्यम्भवति प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपं वायवा याहि दर्शतेति प्रउगमेति प्रथमेऽहनि प्रथमस्याह्नो रूपमा त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ रथवच्च पिबवच्च प्रथमेऽहनि प्रथमस्याह्नो रूपमिन्द्र नेदीय एदिहीतीन्द्रनिहवः प्रगाथः प्रथमे पदे देवता निरुच्यते प्रथमेऽहनि प्रथमस्याह्नो रूपम्प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपमग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः प्रथमेषु पदेषु देवता निरुच्यन्ते प्रथमेऽहनि प्रथमस्याह्नो रूपम्प्र वा इन्द्राय बृहत इति मरुत्वतीयः प्रगाथः प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपमा यात्विन्द्रोऽवस उप न इति सूक्तमेति प्रथमेऽहनि प्रथमस्याह्नो रूपमभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति रथंतरम्पृष्ठम्भवति राथंतरेऽहनि प्रथमेऽहनि प्रथमस्याह्नो रूपं यद्वावान पुरुतमम्पुराषाळ् इति धाय्या वृत्रहेन्द्रो नामान्यप्रा इत्येति प्रथमेऽहनि प्रथमस्याह्नो रूपम्पिबा सुतस्य रसिन इति सामप्रगाथः पिबवान्प्रथमेऽहनि प्रथमस्याह्नो रूपं त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यम्पुरस्तात्सूक्तस्य शंसति स्वस्त्ययनं वै तार्क्ष्यः स्वस्तितायै स्वस्त्ययनमेव तत्कुरुते स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद २९

आ न इन्द्रो दूरादा न आसादिति सूक्तमेति प्रथमेऽहनि प्रथमस्याह्नो रूपं सम्पातौ भवतो निष्केवल्यमरुत्वतीययोर्निविद्धाने वामदेवो वा इमाँल्लोकान-पश्यत्तान्सम्पातैः समपतद्यत्सम्पातैः समपतत्तत्सम्पातानां सम्पातत्वं तद्य-त्सम्पातौ प्रथमेऽहनि शंसति स्वर्गस्य लोकस्य समष्ट्यै सम्पत्त्यै संगत्यै तत्स-वितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथंतरेऽहनि प्रथमेऽहनि प्रथमस्याह्नो रूपं युञ्जते मन उत युञ्जते धिय इति सावित्रं

युक्तवत्प्रथमेऽहनि प्रथमस्याह्नो रूपम्प्र द्यावा यज्ञैः पृथिवी ऋृतावृधेति द्यावापृथिवीयम्प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपमिहेह वो मनसा बन्धुता नर इत्यार्भवं यद्वा एति च प्रेति च तत्प्रथमस्याह्नो रूपं तद्यत्प्रेति सर्वमभ-विष्यत्प्रैष्यन्नेवास्माल्लोकाद्यजमाना इति तद्यदिहेह वो मनसा बन्धुता नर इत्यार्भवम्प्रथमेऽहनि शंसत्ययं वै लोक इहेहास्मिन्नेवैनांस्तल्लोके रमयति देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवम्प्रथमे पदे देवता निरुच्यन्ते प्रथमेऽहनि प्रथमस्याह्नो रूपम्महान्तं वा एतेऽध्वानमेष्यन्तो भवन्ति ये संवत्सरं वा द्वादशाहं वासते तद्यद्देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेव-म्प्रथमेऽहनि शंसति स्वस्तितायै स्वस्त्ययनमेव तत्कुरुते स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद येषां चैवं विद्वानेतद्धोता देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवम्प्रथमेऽहनि शंसति वैश्वानराय पृथुपाजसे विप इत्याग्निमारुतस्य प्रतिपत्प्रथमे पदे देवता निरुच्यते प्रथमेऽहनि प्रथमस्याह्नो रूपम्प्रत्वक्षसो प्रतवसो विरप्शिन इति मारुतम्प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपं जातवेदसे सुनवाम सोममिति जातवेदस्याम्पुरस्तात्सूक्तस्य शंसति स्वस्त्ययनं वै जातवेदस्याः स्वस्तितायै स्वस्त्ययनमेव तत्कुरुते स्वस्ति संवत्सरस्य पार-मश्नुते य एवं वेद प्र तव्यसीं नव्यसीं धीतिमग्नय इति जातवेदस्यम्प्रेति प्रथमेऽहनि प्रथमस्याह्नो रूपं समानमाग्निमारुतम्भवति यच्चाग्निष्टोमे यद्वै यज्ञे समानं क्रियते तत्प्रजा अनुसमनन्ति तस्मात्समानमाग्निमारुतम्भवति ३०

इन्द्रो वै देवता द्वितीयमहर्वहति पञ्चदशः स्तोमो बृहत्साम त्रिष्टप्छन्दो यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद यद्वै नेति न प्रेति यत्स्थितं तद्द्वितीयस्याह्नो रूपं यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद्वृषण्व-द्यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्षमभ्युदितं यद्वार्हतं यत्त्रैष्टुभं यत्कुर्वदेतानि वै द्वितीयस्याह्नो रूपाण्यग्निं दूतं वृणीमह इति द्वितीयस्याह्न आज्यम्भवति कुर्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपं वायो ये ते सहस्त्रिण इति प्रउगं सुतः सोम ऋृतावृधेति वृधन्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपं विश्वानरस्य वस्पतिमिन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ वृधन्वच्चान्तर्वच्च द्वितीयेऽहनि द्वितीयस्याह्नो रूपमिन्द्र नेदीय एदिहीत्यच्युतः प्रगाथ उत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्य ऊर्ध्ववान्द्वितीयेऽहनि द्वितीय-स्याह्नो रूपमग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्या अच्युता

बृहदिन्द्राय गायतेति मरुत्वतीयः प्रगाथो येन ज्योतिरजनयन्नृतावृध इति वृधन्वान्द्वितीयेऽहनि द्वितीयस्याह्नो रूपमिन्द्र सोमं सोमपते पिबेममिति सूक्तम्सजोषा रुद्रैस्तृपदा वृषस्वेति वृषण्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपं त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहत्पृष्ठम्भवति बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपं यद्वावानेति धाय्याच्युतोभयं शृणवच्च न इति सामप्रगाथो यच्चेदमद्य यदु च ह्य आसीदिति बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपं त्यमू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः ३१

या त ऊतिरवमा या परमेति सूक्तं जहि वृष्ण्यानि कृणुही पराच इति वृषण्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपं विश्वो देवस्य नेतुस्तत्सवितुर्वरेण्यमा विश्वदेवं सत्पतिमिति वैश्वदेवस्य प्रतिपदनुचरौ बार्हतेऽहनि द्वितीयेऽहनि द्वितीयस्याह्नो रूपमुदुष्य देवः सविता हिरण्ययेति सावित्रमूर्ध्ववद्द्वि-तीयेऽहनि द्वितीयस्याह्नो रूपं ते हि द्यावपृथिवी विश्वशम्भुवेति द्यावापृथिवीयं सुजन्मनी धिषणे अन्तरीयत इत्यन्तर्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपं तक्षन्रथं सुवृतं विद्मनापस इत्यार्भवं तक्षन्हरि इन्द्रवाहा वृषण्वसू इति वृषण्व-द्द्वितीयेऽहनि द्वितीयस्याह्नो रूपं यज्ञस्य वो रथ्यं विश्पतिं विशामिति वैश्वदेवं वृषा केतुर्यजतो द्यामशायतेति वृषण्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपं तदु शार्यातमङ्गिरसो वै स्वर्गाय लोकाय सत्रमासत ते ह स्म द्वितीयं-द्वितीयमेवाहरागत्य मुह्यन्ति तान्वा एतच्छार्यातो मानवो द्वितीयेऽहनि सूक्तमशंसयत्ततो वै ते प्र यज्ञमजानन्प्र स्वर्गं लोकं तद्यदेतत्सूक्तं द्वितीयेऽहनि शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै पृक्षस्य वृष्णो अरुषस्य नू सह इत्याग्निमारुतस्य प्रतिपद्वृषण्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपं वृष्णे शर्धाय सुमखाय वेधस इति मारुतं वृषण्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपं जातवेदसे सुनवाम सोममिति जातवेदस्याच्युता यज्ञेन वर्धत जातवेदसमिति जातवेदस्यं वृधन्वद्द्वितीयेऽहनि द्वितीयस्याह्नो रूपमह्नो रूपम् ३२ ५

इति चतुर्थपञ्चिका समाप्तापञ्चिका ५

अध्याय २१ खण्डः १-५

विश्वे वै देवा देवतास्तृतीयमहर्वहन्ति सप्तदशः स्तोमो वैरूपं साम जगती

छन्दो यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद यद्वै समानोदर्कं तत्तृतीयस्याह्नो रूपं यदश्ववद्यदन्तवद्यत्पुनरावृत्तं यत्पुनर्नुउन्नृत्तं यद्रतवद्यत्पर्यस्तवद्यत्त्रिवद्यदन्तरूपं यदुत्तमे पदे देवता निरुच्यते यदसौ लोकोऽभ्युदितो यद्वैरूपं यज्ञागतं यत्कृतमेतानि वै तृतीयस्याह्नो रूपाणि युद्क्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिवेति तृतीयस्याह्न आज्यम्भवति देवा वै तृतीयेनाह्ना स्वर्गं लोकमायंस्तानसुरा रक्षांस्यन्ववारयन्त ते विरूपा भवत विरूपा भवतेति भवन्त आयंस्ते यद्विरूपा भवत विरूपा भवतेति भवन्त आयंस्तद्वैरूपं सामाभवत्तद्वैरूपस्य वैरूपत्वं विरूपः पाप्मना भूत्वा पाप्मा-नमपहते य एवं वेद तान्ह स्मान्वेवागछन्ति समेव सृज्यन्ते तानश्वा भूत्वा पद्भिरपाघ्नत यदश्वा भूत्वा पद्भिरपाघ्नत तदश्वानामश्वत्वमश्नुते यद्यत्कामयते य एवं वेद तस्मादश्वः पशूनां जविष्ठस्तस्मादश्वः प्रत्यङ्पदा हिनस्त्यप पाप्मानं हते य एवं वेद तस्मादेतदश्ववदाज्यम्भवति तृतीयेऽहनि तृतीयस्याह्नो रूपं वायवा याहि वीतये वायो याहि शिवा दिव इन्द्रश्च वायवेषां सुतानामा मित्रे वरुणे वयमश्विनावेह गछतमा याह्यद्रिभिः सुतं सजूर्विश्वेभिर्देवेभिरुत नः प्रिया प्रियास्वित्यौष्णिहम्प्रउगं समानोदर्कं तृतीयेऽहनि तृतीयस्याह्नो रूपं तं-तमिद्राधसे महे त्रय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ निनृत्तव-त्त्रिवत्तृतीयेऽहनि तृतीयस्याह्नो रूपमिन्द्र नेदीय एदिहीत्यच्युतः प्रगाथः प्र नूनम्ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यो निनृत्तवांस्तृतीयेऽहनि तृतीयस्याह्नो रूपम-ग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्याप इति धाय्या अच्युता नकिः सुदासो रथम्पर्यास न रीरमदिति मरुत्वतीयः प्रगाथः पर्यस्तवांस्तृतीयेऽहनि तृतीय-स्याह्नो रूपं त्र्यर्यमा मनुषो देवतातेति सूक्तं त्रिवत्तृतीयेऽहनि तृतीयस्याह्नो रूपं यद्द्याव इन्द्र ते शतं यदिन्द्र यावतस्त्वमिति वैरूपम्पृष्ठम्भवति राथंतरेऽहनि तृतियेऽहनि तृतीयस्याह्नो रूपं यद्वावानेति धाय्याच्युताभि त्वा शूर नोनुम इति रथंतरस्य योनिमनु निवर्तयति राथंतरं ह्येतदहरायतनेनेन्द्र त्रिधातु शरणमिति सामप्रगाथस्त्रिवांस्तृतीयेऽहनि तृतीयस्याह्नो रूपं त्यमू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः १

यो जात एव प्रथमो मनस्वानिति सूक्तं समानोदर्कं तृतीयेऽहनि तृतीयस्याह्नो रुपां तदु सजनीयमेतद्वा इन्द्रस्येन्द्रियं यत्सजनीयमेतस्मिन्वै शस्यमान इन्द्रमिन्द्रियमाविशति तद्धाप्याहुश्छन्दोगास्तृतीयेऽहनि बह्वृचा इन्द्रस्येन्द्रियं

शंसन्तीति तदु गार्त्समदमेतेन वै गृत्समद इन्द्रस्य प्रियं धामोपागछत्स परमं लोकमजयदुपेन्द्रस्य प्रियं धाम गछति जयति परमं लोकं य एवं वेद तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथंतरेऽहनि तृतीयेऽहनि तृतीयस्याह्नो रूपं तद्देवस्य सवितुर्वार्यम्महदिति सावित्रमन्तो वै महदन्तस्तृतीयमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपं घृतेन द्यावापृथिवी अभीवृते इति द्यावापृथिवीयं घिअृतश्रिया घृतपृचा घृतावृधेति पुनरावृत्तम्पुनर्निनृत्तां तृतीयेऽहनि तृतीयस्याह्नो रूपमनश्वो जातो अनभीशुरुक्थ्य इत्यार्भवमथस्त्रिचक्र इति त्रिवत्तृतीयेऽहनि तृतीयस्याह्नो रूपम्परावतो ये दिधिषन्त आप्यमिति वैश्वदेवमन्तो वै परावतोऽन्तस्तृतीयमहस्तृतीयेऽहनिऽतृतीयस्याह्नो रूपं तदु गायमेतेन वै गयः प्लातो विश्वेषां देवानाम्पृयं धामोपागछत्स परमं लोकमजयदुप विश्वेषां देवानाम्प्रियं धाम गछति जयति परमं लोकं य एवं वेद वैश्वानराय धिषणामृतावृध इत्याग्निमारुतस्य प्रतिपदन्तो वै धिषणान्तस्तृतीयमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपं धारावरा मरुतो धृष्णवोजस इति मारुतम्बह्वभिव्याहृत्यमन्तो वै बह्वन्तस्तृतियमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपं जातवेदसे सुनवाम सोममिति जातवेदस्याच्युता त्वमग्ने प्रथमो अङ्गिरा ऋषिरिति जातवेदस्यम्पुरस्तादुदर्कं तृतीयेऽहनि तृतीयस्याह्नो रूपं त्वंत्वमित्युत्तरं त्र्यहमभिवदति संतत्यै संततैस्त्र्यहैरव्यवछिन्नैर्यन्ति य एवं विद्वांसो यन्ति २

आप्यन्ते वै स्तोमा आप्यन्ते छन्दांसि तृतीयेऽहन्येतदेव तत उच्छिष्यते वागित्येव तदेतदक्षरं त्र्यक्षरं वागित्येकमक्षरमक्षरमिति त्र्यक्षरं स एवैष उत्तरस्त्र्याहो वागेकं गौरेकं द्यौरेकं ततो वै वागेव चतुर्थमहर्वहति तद्यच्चतुर्थमहर्न्यूङ्खयन्त्येतदेव तदक्षरमभ्यायछन्त्येतद्वर्धयन्त्येतत्प्रबिभावयिषन्ति चतुर्थस्याह्न उद्यत्या अन्नं वै न्यूङ्खो यदेलवा अभिगेष्णाश्चरन्त्यथान्नाद्यम्प्रजायते तद्यच्चतर्थमहर्न्यूङ्खयन्त्यन्नमेव तत्प्रजनयन्त्यन्नाद्यस्य प्रजात्यै तस्माच्चतुर्थमहर्जातवद्भवति चतुरक्षरेण न्यूङ्खयेदित्याहुश्चतुष्पादा वै पशवः पशूनामवरुद्ध्यै त्र्यक्षरेण न्यूङ्खयेदित्याहुस्त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानामभिजित्या एकाक्षरेण न्यूङ्खयेदिति ह स्माह लाङ्गलायनो ब्रह्मा मौद्गल्य एकाक्षरा वै वाग् एष वाव सम्प्रति न्यूङ्खं न्यूङ्खयति य एकाक्षरेण न्यूङ्खयतीति द्व्यक्षरेणैव न्यूङ्खयेत्प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः

पशवो यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति तस्मा-द्द्व्यक्षरेणैव न्यूङ्खयेन्मुखतः प्रातरनुवाके न्यूङ्खयति मुखतो वै प्रजा अन्नमदन्ति मुखत एव तदन्नाद्यस्य यजमानं दधाति मध्यत आज्ये न्यूङ्खयति मध्यतो वै प्रजा अन्नं धिनोति मध्यत एव तदन्नाद्यस्य यजमानं दधाति मुखतो मध्यंदिने न्यूङ्खयति मुखतो वै प्रजा अन्नमदन्ति मुखत एव तदन्नाद्यस्य यजमानं दधाति तदुभयतो न्यूङ्खम्परिगृह्णाति सवनाभ्यामन्नाद्यस्य परिगृहीत्यै ३

वाग्वै देवता चतुर्थमहर्वहत्येकविंशः स्तोमो वैराजं सामानुष्टुप्छन्दो यथा-देवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राद्न्नोति य एवं वेद यद्वा एति च प्रेति च तच्चतुर्थस्याह्नो रूपं यद्ध्येव प्रथममहस्तदेतत्पुनर्यच्चतुर्थं यद्युक्त-वद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्रथमे पदे देवता निरुच्यते यदयं लोकोऽभ्युदि-तो यज्ञातवद्यद्धववद्यच्छुक्रवद्यद्वाचो रूपं यद्वैमदं यद्विरिफितं यद्विछन्दा यदूनातिरिक्तं यद्वैराजं यदानुष्टुभं यत्करिष्यद्यत्प्रथमस्याह्नो रूपमेतानि वै चतुर्थस्याह्नो रूपाण्याग्निं न स्ववृक्तिभिरिति चतुर्थस्याह्न आज्यम्भवति वैमदं विरिफितं विरिफितस्य ऋषेश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपमष्टर्चम्पाङ्क्तम्पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशूनामवरुद्ध्यै ता उ दश जगत्यो जगत्प्रातःसवन एष त्र्यहस्तेन चतुर्थस्याह्नो रूपं ता उ पञ्चदशानुष्टुभ आनुष्टुभं ह्येतदहस्तेन चतु-र्थस्याह्नो रूपं ता उ विंशतिर्गायत्र्यः पुनः प्रायणीयं ह्येतदहस्तेन चतुर्थस्याह्नो रूपं तदेतदस्तुतमसस्तमयातयाम सूक्तं यज्ञ एव साक्षात्तद्यदेतच्चतुर्थस्याह्न आज्यम्भवति यज्ञादेव तद्यज्ञं तन्वते वाचमेव तत्पुनरुपयन्ति संतत्यै संततैस्त्र्यहैरव्यवछिन्नैर्यन्ति य एवं विद्वांसो यन्ति वायो शुक्रो अयामि ते विहि होत्रा अवीता वायो शतं हरीणामिन्द्रश्च वायवेषां सोमानामा चिकितान सुक्रतू आ नो विश्वाभिरूतिभिस्त्यमु वो अप्रहणमप त्यं वृजिनं रिपुमम्बितमे नदीतम इत्यानुष्टुभम्प्रउगमेति च प्रेति च शुक्रवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं तं त्वा यज्ञेभिरीमह इति मरुत्वतीयस्य प्रतिपदीमह इत्यभ्यायाम्यमिवैतदहस्तेन चतुर्थस्याह्नो रूपमिदं वसो सुतमन्ध इन्द्र नेदीय एदिहि प्रैतु ब्रह्मणस्पतिरग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपः प्र व इन्द्रय बृहत इति प्रथमेनाह्ना समान आतानश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं श्रुधी हवमिन्द्र मा रिषण्य इति सूक्तं हववच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्मरुत्वाँ इन्द्र वृषभो रणायेति सूक्तमुग्रं सहोदामिह तं हुवेमेति हववच्चतुर्थेऽहनि चतुर्थस्याह्नो रुपां तदु त्रैष्टुभं तेन

प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवत इमं नु मायिनं हुव इति पर्यासो हववांश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वै तच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद्गायत्रीषु निविदं दधाति पिबा सोममिन्द्र मन्दतु त्वा श्रुधी हवं विपिपानस्याद्रेरिति वैराजम्पृष्ठम्भवति बार्हतेऽहनि चतुर्थेऽहनि चतुर्थस्याह्नो रूपं यद्वावानेति धाय्याच्युता त्वामिद्धि हवामह इति बृहतो योनिमनु निवर्तयति बार्हतं ह्येतदहरायतनेन त्वमिन्द्र प्रतूर्तिष्विति सामप्रगाथोऽशस्तिहा जनितेति जात-वांश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं त्यमू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः ४

कुह श्रुत इन्द्रः कस्मिन्नद्येति सूक्तं वैमदं विरिफितं विरिफितस्य ऋषेश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं युध्मस्य ते वृषभस्य स्वराज इति सूक्तमुग्रं गभीरं जनुषाभ्युग्रमिति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं तदु त्रैष्टुभं तेन प्रतिष्ठित-पदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते त्यमु वः सत्रासाहमिति पर्यासो विश्वासु गीर्ष्वायतमित्यभ्यायाम्यमिवैतदहस्तेन चतुर्थस्याह्नो रूपं ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनम्वहन्ति तद्वै तच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद्गायत्रीषु निविदं दधाति विश्वो देवस्य नेतुस्तत्सवितुर्वरेण्यमा विश्वदेवं सत्पतिमिति वैश्वदेवस्य प्रतिपदनुचरौ बार्हतेऽहनि चतुर्थेऽहनि चतुर्हस्याह्नो रूपमा देवो यातु सविता सुरत्न इति सावित्रमेति चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्प्र द्यावा यज्ञैः पृथिवी नमोभिरिति द्यावापृथिवीयम्प्रेति चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्प्र ऋभुभ्योऽग्रो दूतमिव वाचमिष्य इत्यार्भवम्प्रेति च वाचमिष्य इति च चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्प्र शुक्रैतु देवी मनीषेति वैश्वदेवम्प्रेति च शुक्रवच्च चतुर्थेऽहनि चतुर्थस्याह्नो रूपं ता उ विछन्दसः सन्ति द्विपदाः सन्ति चतुष्पदास्तेन चतुर्थस्याह्नो रूपं वैश्वानरस्य सुमतौ स्यामेत्याग्निमारुतस्य प्रतिपदितो जात इति जातव-च्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं क ईं व्यक्ता नरः सनीळा इति मारुतं नकिर्ह्येषां जनूंषि वेदेति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं ता उ विछन्दसः सन्ति द्विपदाः सन्ति चतुष्पदास्तेन चतुर्थस्याह्नो रूपं जातवेदसे सुनवाम सोममिति जातवेदस्याच्युताग्निं नरो दीधितिभिररण्योरिति जातवेदस्यं हस्तच्युती जनयन्तेति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपं ता उ विछन्दसः सन्ति विराजः

सन्ति त्रिष्टुभस्तेन चतुर्थस्याह्नो रूपमह्नो रूपम् ५ १

अध्याय २२ खराडः १-१०

गौर्वै देवता पञ्चममहर्वहति त्रिणवःस्तोमः शाक्वरं साम पाङ्क्तिश्छन्दो यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद यद्वै नेति न प्रेति यत्स्थितं तत्पञ्चमस्याह्नो रूपं यद्धयेव द्वितीयमहस्तदेतत्पुनर्यत्पञ्चमं यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद्वृषरावद्यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्षमभ्युदितं यद्दुग्धवद्यदूधवद्यद्धेनुमद्यत्पृश्निमद्यन्मद्वद्यत्पशुरूपं यद-ध्यासवद् विक्षुद्रा इव हि पशवो यज्जागतं जागता हि पशवो यद्बार्हतम्-बार्हता हि पशावो यत्पाङ्क्तम् पाङ्क्ता हि पशवो यद्वामं वामं हि पशवो यद्धविष्मद्धविर्हि पशवो यद्वपुष्मद्- वपुर्हि पशवो - यच्छाक्वरं यत्पाङ्क्तं यत्कुर्वद्यद्द्वितीयस्याह्नो रूपमेतानि वै पञ्चमस्याह्नो रूपाणीममू षु वो अतिथिमुषर्बुधमिति पञ्चमस्याह्न आज्यम्भवति जागतमध्यासवत्पशुरू-पम्पञ्चमेऽहनि पञ्चमस्याह्नो रूपमा नो यज्ञं दिविस्पृशमा नो वायो महे तने रथेन पृथुपाजसा बहवः सूरचक्षस इमा उ वां दिविष्टयः पिबा सुतस्य रसिनो देवं-देवं वोऽवसे देवंदेवम्बृहदु गायिषे वच इति बार्हतम्प्रउगम्पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्यत्पाञ्चजन्यया विशेति मरुत्वतीयस्य प्रतिपत्पाञ्चजन्ययेति पञ्चमेऽहनि पञ्चमस्याह्नो रूपमिन्द्र इत्सोमपा एक इन्द्र नेदीय एदिह्युत्तिष्ठ ब्रह्मणस्पतेऽग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपो बृहदिन्द्राय गायतेति द्वितीयेनाह्ना समान आतानः पञ्चमेऽहनि पञ्चमस्याह्नो रूपमवितासि सुन्वतो वृक्तबर्हिष इति सूक्तम्मद्वत्पाङ्क्तम्पञ्चपदम्पञ्चमेऽहनि पञ्चमस्याह्नो रूपमित्थ हि सोम इन्मद इति सूक्तम्मद्वत्पाङ्क्तम्पञ्चपदम्पञ्चमेऽहनि पञ्चमस्याह्नो रूपमिन्द्र पिब तुभ्यं सुतो मदायेति सूक्तम्मद्वत्त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते मरुत्वाँ इन्द्र मीढ्व इति पर्यासो नेति न प्रेति पञ्चमेऽहनि पञ्चमस्याह्नो रूपं ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वै तच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद्गायत्रीषु निविदं दधाति ६

महानाम्नीष्वत्र स्तुवते शाक्वरेण साम्ना राथंतरेऽहनि पञ्चमेऽहनि पञ्चमस्याह्नो रूपमिन्द्रो वा एताभिर्महानात्मानं निरमिमीत तस्मान्महानाम्न्योऽथो इमे वै

लोका महानाम्न्य इमे महान्त इमान्वै लोकान्प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद्यदिदम्किंच यदिमाँल्लोकान्प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद्यदिदं किंच तच्छक्वर्योऽभवंस्तच्छक्वरीणां शक्वरीत्वं ता ऊर्ध्वाः सीम्नोऽभ्यसृजत यदूर्ध्वाः सीम्नोऽभ्यसृजत तत्सिमा अभवंस्तत्सिमानां सिमात्वं स्वादोरित्था विषूवत उप नो हरिभिः सुतमिन्द्रं विश्वा अवीवृधन्नित्यनुरूपो वृषण्वान्पृश्निमान्मद्वान्वृधन्वान्पञ्चमेऽहनि पञ्चमस्याह्नो रूपं यद्वावानेति धाय्याच्युताभि त्वा शूर नोनुम इति रथंतरस्य योनिमनु निवर्तयति राथंतरं ह्येतदहरायतनेन मो षु त्वा वाघतश्चनेति सामप्रगाथोऽध्यासवान्पशुरूपम्पञ्चमेऽहनि पञ्चमस्याह्नो रूपं त्यमू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः ७

प्रेदम्ब्रह्म वृत्रतूर्येष्वाविथेति सूक्तम्पाङ्क्तम्पञ्चपदम्पञ्चमेऽहनि पञ्चनास्याह्नो रूपमिन्द्रो मदाय वावृध इति सूक्तम्मद्वत्पाङ्क्तम्पञ्चपदम्पञ्चमेऽहनि पञ्चमस्याह्नो रूपं सत्रा मदासस्तव विश्वजन्या इति सूक्तम्मद्वत्त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते तमिन्द्रं वाजयामसीति पर्यासः स वृषा वृषभो भुवदिति पशुरूपम्पञ्चमेऽहनि पञ्चमस्याह्नो रूपं ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वै तच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद्गायत्रीषु निविदं दधाति तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथंतरेऽहनि पञ्चमेऽहनि पञ्चमस्याह्नो रूपमुदु ष्य देवः सविता दमूना इति सावित्रमा दाशुषे सुवति भूरि वाममिति वामम्पशुरूपम्पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्मही द्यावापृथिवी इह ज्येष्ठे इति द्यावापृथिवीयं रुवद्धोक्षेति पशुरूपम्पञ्चमेऽहनि पञ्चमस्याह्नो रूपमृभुर्विभ्वा वाज इन्द्रो नो अच्छेत्यार्भवं वाजो वै पशवः पशुरूपम्पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्स्तुषे जनं सुव्रतं नव्यसीभिरिति वैश्वदेवमध्यासवत्पशुरूपम्पञ्चमेऽहनि पञ्चमस्याह्नो रूपं हविषः पान्तमजरं स्वर्विदीत्याग्निमारुतस्य प्रतिपद्धविष्मत्पञ्चमेऽहनि पञ्चमस्याह्नो रूपं वपुर्नु तच्चिकितुषे चिदस्त्विति मारुतं वपुष्मत्पञ्चमेऽहनि पञ्चमस्याह्नो रूपं जातवेदसे सुनवाम सोममिति जातवेदस्याच्युताग्निर्होता गृहपतिः स राजेति जातवेदस्यमध्यासवत्पशुरूपम्पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ८

देवक्षेत्रं वा एतद्यत्षष्ठमहर्देवक्षेत्रं वा एत आगछन्ति ये षष्ठमहरागछन्ति न वै

देवा अन्योन्यस्य गृहे वसन्ति नर्तुर्ऋतोर्गृहे वसतीत्याहुस्तद्यथायथमृत्विज ऋतुयाजान्यजन्त्यसम्प्रदायं तद्यथर्त्वृतून्कल्पयन्ति यथायथं जनतास्तदाहु-र्नर्तुप्रैषैः प्रेषितव्यं नर्तुप्रैषैर्वषट्कृत्यं वाग्वा ऋतुप्रैषा आप्यते वै वाक्षष्ठेऽहनीति यदृतुप्रैषैः प्रेष्येयुर्यदृतुप्रैषैर्वषट्कुर्युर्वाचमेव तदाप्तां श्रान्तामृक्णवहीं वहरावि-णीमृछेयुर्यद्विभिर्न प्रेष्येयुर्यद्विभिर्न वषट्कुर्युरच्युताद्यज्ञस्य च्यवेरन्यज्ञात्प्रा-णात्प्रजापतेः पशुभ्यो जिह्मा ईयुस्तस्मादृग्मेभ्य एवाधि प्रेषितव्यमृग्मेभ्योऽधि वषट्कृत्यं तन्न वाचमाप्तां श्रान्तामृक्णवहीं वहराविणीमृछन्ति नाच्युताद्यज्ञस्य च्यवन्ते न यज्ञात्प्राणात्प्रजापतेः पशुभ्यो जिह्मा यन्ति ९

पारुच्छेपीरुपदधति पूर्वयोः सवनयोः पुरस्तात्प्रस्थितयाज्यानां रोहितं वै नामैतच्छन्दो यत्पारुच्छेपमेतेन वा इन्द्रः सप्त स्वर्गाँल्लोकानरोहद्रोहति सप्त स्वर्गाँल्लोकन्य एवं वेद तदाहुर्यत्पञ्चपदा एव पञ्चमस्याह्नो रूपं षट्पदाः षष्ठस्याथ कस्मात्सप्तपदाः षष्ठेऽहञ्छस्यन्त इति षड्भिरेव पदैः षष्ठमह-राप्नुवन्त्यपछिद्यैवैतदहर्यत्सप्तमं तदेव सप्तमेन पदेनाभ्यारभ्य वसन्ति वाचमेव तत्पुनरुपयन्ति संतत्यै संततैस्त्र्यहैरव्यवछिन्नैर्यन्ति य एवं विद्वांसो यन्ति १०

देवासुरा वा एषु लोकेषु समयतन्त ते वै देवाः षष्ठेनैवाह्नैभ्यो लोके-भ्योऽसुरान्प्राणुदन्त तेषां यान्यन्तर्हस्तीनानि वसून्यासंस्तान्यादाय समुद्र-म्प्रौप्यन्त त एतेनैव छन्दसानुहायान्तर्हस्तीनानि वसून्याददत तद्यदेतत्पद-म्पुनःपदं स एवाङ्कुश आसञ्जनायाद्विषतो वसु दत्ते निरेनमेभ्यः सर्वेभ्यो लोकेभ्यो नुदते य एवं वेद ११

द्यौर्वै देवता षष्ठमहर्वहति त्रयस्त्रिंशः स्तोमो रैवतं सामातिछन्दाश्छन्दो यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद यद्वै समानोदर्कं तत्षष्ठस्याह्नो रूपं यद्ध्येव तृतीयमहस्तदेतत्पुनर्यत्षष्ठं यद-श्ववद्यदन्तवद्यत्पुनरावृत्तं यत्पुनर्निनृत्तं यद्रतवद्यत्पर्यस्तवद्यत्त्रिवद्यदन्तरूपं य-दुत्तमे पदे देवता निरुच्यते यदसौ लोकोऽभ्युदितो यत्पारुच्छेपं यत्सप्तपदं यन्नाराशंसं यन्नाभानेदिष्ठं यद्रैवतं यदतिछन्दा यत्कृतं यत्तृतीयस्याह्नो रूपं एतानि वै षष्ठस्याह्नो रूपाण्ययं जायत मनुषो धरीमणीति षष्ठस्याह्न आयम्भवति पारुच्छेपमतिछन्दाः सप्तपदं षष्ठेऽहनि षष्ठस्याह्नो रूपं स्तीर्ण-

म्बर्हिरुप नो याही वितय आ वां रथो नियुत्वान्वक्षदवसे सुषुमा यातमद्रिभिर्युवां स्तोमेभिर्देवयन्तो अश्विनावर्मह इन्द्र वृषन्निन्द्रास्तु श्रौषळो षू णो अग्ने शृणुहि त्वमीळितो ये देवासो दिव्येकादश स्थेयमददाद्रभस- मृणच्युतमिति प्रउगम्पारुच्छेपमतिछन्दाः सप्तपदं षष्ठेऽहनि षष्ठस्याह्नो रूपं स पूर्व्यो महानामिति मरुत्वतीयस्य प्रतिपदन्तो वै महदन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपं त्रय इन्द्रस्य सोमा इन्द्र नेदीय एदिहि प्र नूनम्ब्रह्मणस्पतिरग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपो नकिः सुदासो रथमिति तृतीयेनाह्ना समान आतानः षष्ठेऽहनि षष्ठस्याह्नो रूपं यं त्वं रथमिन्द्र मेधसातय इति सूक्त- म्पारुच्छेपमतिछन्दाः सप्तपदं षष्ठेऽहनि षष्ठस्याह्नो रूपं स यो वृषा वृष्ण्येभिः समोका इति सूक्तं समानोदर्कं षष्ठेऽहनि षष्ठस्याह्नो रूपमिन्द्र मरुत्व इह पाहि सोममिति सूक्तं तेभिः साकम्पिबतु वृत्रखाद इत्यन्तो वै खादोऽन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपं तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधा- रायतनादेवैतेन न प्रच्यवतेऽयं ह येन वा इदमिति पर्यासः स्वर्मरुत्वता जितमित्यन्तो वै जितमन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपं ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वै तच्छन्दो वहति यस्मि- न्निविद्धीयते तस्माद्गायत्रीषु निविदं दधाति रेवतीर्नः सधमादे रेवाँ इद्रेवत स्तोतेति रैवतम्पृष्ठम्भवति बार्हतेऽहनि षष्ठेऽहनि षष्ठस्याह्नो रूपं यद्वावानेति धाय्याच्युता त्वामिद्धि हवामह इति बृहतो योनिमनु निवर्तयति बार्हतं ह्येतदहरायतनेनेन्द्रमिद्देवतातय इति सामप्रगाथो निनृत्तवान्षष्ठेऽहनि षष्ठस्याह्नो रूपं त्यमू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः १२

एन्द्र याह्युप नः परावत इति सूक्तम्पारुच्छेपमतिछन्दाः सप्तपदं षष्ठेऽहनि षष्ठस्याह्नो रूपम्प्र घा न्वस्य मबतो महानीति सूक्तं समानोदर्कं षष्ठेऽहनि षष्ठस्याह्नो रूपमभूरेको रयिपते रयीणामिति सूक्तं रथमा तिष्ठ तुविनृम्ण भीममित्यन्तो वै स्थितमन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपं तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यावत उप नो हरिभिः सुतमिति पर्यासः समानोदर्कः षष्ठेऽहनि षष्ठस्याह्नो रूपं ता उ गायत्र्यो गायात्र्यो वा एतस्य त्र्यहस्य मध्यंदिनम्वहन्ति तद्वै तच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद्गायत्रीषु निविदं दधात्यभि त्यं देवं सवितारमोण्योरिति वैश्वदेवस्य प्रतिपदतिछन्दाः षाष्ठेऽहनि षष्ठस्याह्नो रूपं तत्सवितुर्वरेण्यं दोषो आगादि-

त्यनुचरोऽन्तो वै गतमन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपमुदु ष्य देवः सविता सवायेति सावित्रं शश्वत्तमं तदपा वह्निरस्थादित्यन्तो वै स्थितमन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपं कतरा पूर्वा कतरापरायोरिति द्यावापृथिवीयं समानोदर्कं षष्ठेऽहनि षष्ठस्याह्नो रूपं किमु श्रेष्ठः किं यविष्ठो न आजगन्नुप नो वाजा अध्वरमृभुक्षा इत्यार्भवं नाराशंसं त्रिवत्षष्ठेऽहनि षष्ठस्याह्नो रूपमिदमित्था रौद्रं गूर्तवचा ये यज्ञेन दक्षिणया समक्ता इति वैश्वदेवम् १३

नाभानेदिष्ठं शंसति नाभानेदिष्ठं वै मानवम्ब्रह्मचर्यं वसन्तम्भ्रातरो निरभजन्सोऽब्रवीदेत्य किम्मह्यमभाक्तेत्येतमेव निष्ठावमववदितारमित्यब्रुवंस्तस्माद्धाप्येतर्हि पितरम्पुत्रा निष्ठावोऽववदितेत्येवाचक्षते स पितरमेत्याब्रवीत्त्वां ह वाव मह्यम्तताभाक्षुरिति तम्पिताब्रवीन्मा पुत्रक तदादृथा अङ्गिरसो वा इमे स्वर्गाय लोकाय सत्रमासते ते षष्ठंषष्ठमेवाहरागत्य मुह्यन्ति तानेते सूक्ते षष्ठेऽहनि शंसय तेषां यत्सहस्रं सत्रपरिवेषणं तत्ते स्वर्यन्तो दास्यन्तीति तथेति तानुपैत्प्रति गृभ्णीत मानवं सुमेधस इति तमब्रुवन्किंकामो वदसीतीदमेव वः षष्ठमहः प्रज्ञापयानीत्यब्रवीदथ यद्व एतत्सहस्रं सत्रपरिवेषणं तन्मे स्वर्यन्तो दत्तेहि तथेति तानेते सूक्ते षष्ठेऽहनि अशंसयत्ततो वै ते प्र यज्ञमजानन्प्र स्वर्गं लोकं तद्यदेते सूक्ते षष्ठेऽहनि शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै तं स्वर्यन्तोऽब्रुवन्नेतत्ते ब्राह्मण सहस्रमिति तदेनं समाकुर्वाणम्पुरुषः कृष्णशवास्युत्तरत उपोत्थायाब्रवीन्मम वा इदम्मम वै वास्तुहमिति सोऽब्रवीन्मह्यं वा इदमदुरिति तमब्रवीत्तद्वै नौ तवैव पितरि प्रश्न इति स पितरमैत्तम्पिताब्रवीन्ननु ते पुत्रकादूरित्यदुरेव म इत्यब्रवीत्तत्तु मे पुरुषः-कृष्णशवास्युत्तरत उपोदतिष्ठन्मम वा इदम्मम वै वास्तुहमित्यदितेति तम्पिताब्रवीत्तस्यैव पुत्रक तत्तत्तु स तुभ्यं दास्यतीति स पुनरेत्याब्रवीत्तव ह वाव किल भगव इदमिति मे पिताहेति सोऽब्रवीत्तदहं तुभ्यमेव ददामि य एव सत्यमवादीरिति तस्मादेवं विदुषा सत्यमेव वदितव्यं स एष सहस्रसनिर्मन्त्रो यन्नाभानेदिष्ठ उपैनं सहस्रं नमति प्र षष्ठेनाह्ना स्वर्गं लोकं जानाति य एवं वेद १४

तान्येतानि सहचराणियत्याचक्षते नाभानेदिष्ठं वालखिल्या वृषाकपिमेवायमरुतं तानि सहैव शंसेद्यदेषामन्तरियात्तद्यजमानस्यान्तरियाद्यदि नाभानेदिष्ठं

रेतोऽस्यान्तरियाद्यदि वालखिल्याः प्राणानस्यान्तरियाद्यदि वृषाकपिमात्मान-मस्यान्तरियाद्यद्येवयामरुतम्प्रहृष्ठाया एनं च्यावयेद्दैव्यै च मानुष्यै च ना-भानेदिष्ठेनैव रेतोऽसिञ्चत्तद्वालखिल्याभिर्व्यकरोत्सुकीर्तिना काक्षीवतेन योनिं व्यहापयदुरौ यथा तव शर्मन्मदेमेति तस्माज्ज्यायान्सन्गर्भः कनीयांसं सन्त-म्योनिं न हिनस्ति ब्रह्मणा हि स क्लृप्त एवयामरुतैतवै करोति तेनेदं सर्वमेतवै कृतमेति यदिदं किंचाहश्च कृष्णमहरर्जुनं चेत्याग्निमारुतास्य प्रतिपदहश्चाहश्चेति पुनरावृत्तम्पुनर्निनृत्तं षष्ठेऽहनि षष्ठस्याह्नो रूपम्मध्वो वो नाम मारुतं यजत्रा इति मारुतम्बह्वभिव्याहृत्यमन्तो वै बह्वन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपं जा-तवेदसे सुनवाम सोममिति जातवेदस्याच्युता स प्रत्नथा सहसा जायमान इति जातवेदस्यं समानोदर्कं षष्ठेऽहनि षष्ठस्याह्नो रूपं धारयन्धारयन्निति शंसति प्रस्रंसाद्वा अन्तस्य बिभाय तद्यथा पुनराग्रन्थम्पुनर्निग्रन्थमन्तम्बध्नीयान्मयूखं वान्ततो धारणाय निहन्यात्तादृक्तद्यद्धारयन्-धारयन्निति शंसति संतत्यै संततैस्त्र्यहैरव्यवछिन्नैर्यन्ति य एवं विद्वांसो यन्ति यन्ति १५ २

## अध्याय २३ खण्डः १-४

यद्वा एति च प्रेति च तत्सप्तमस्याह्नो रूपं यद्ध्येव प्रथममहस्तदेवैतत्पुनर्यत्सप्तमं यद्युक्तवद्यद्रथवद्यदाशुमद्यै पिबवद्यत्प्रथमे पदे देवता निरुच्यते यदयं लोकोऽभ्युदितो यज्जातवद्यदनिरुक्तं यत्करिष्यद्य प्रथमस्याह्नो रूपं एतानि वै सप्तमस्याह्नो रूपाणि समुद्रादूर्मिर्मधुमाँ उदारदिति सप्तमस्याह्न आज्यम्भव-त्यनिरुक्तम्सप्तमेऽहनि सप्तमस्याह्नो रूपं वाग्वै समुद्रो न वै वाक्क्षीयते न समुद्रः क्षीयते तद्यदेतत्सप्तमस्याह्न आज्यम्भवति यज्ञादेव तद्यज्ञं तन्वते वाचमेव तत्पुनरुपयन्ति संतत्यै संततैस्त्र्यहैरव्यवछिन्नैर्यन्ति य एवं विद्वांसो यन्त्याप्यन्ते वै स्तोमा आप्यन्ते छन्दांसि षष्ठेऽहनि तद्यथैवाद आज्येनावदानानि पुनः प्रत्यभिघारयन्त्ययातयामताया एवमेवैतत्स्तोमांश्च छन्दांसि च पुनः प्रत्युपयन्त्ययातयामतायै यदेतत्सप्तमस्याह्न आज्यम्भवति तदु त्रैष्टुभं त्रिष्टु-प्प्रातःसवन एष त्र्यह आ वायो भूष शुचिपा उप नः प्र याभिर्यासि दाश्वांसमछा नो नियुद्भिः शतिनीभिरध्वरम्प्र सोता जीरो अध्वरेष्वस्थाद्य वायव इन्द्रमादनासो या वां शतं नियुतो याः सहस्रम्प्र यद्वाम्मित्रावरुणा स्पूर्धन्ना गोमता नासत्या रथेना नो देव शवसा याहि शुष्मिन्प्र वो यज्ञेषु देवयन्तो अर्चन्प्र क्षोदस धायसा सस्र एषेति प्रउगमेति च प्रेति च सप्तमेऽहनि

सप्तमस्याह्नो रूपं तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यह आ त्वा रथं यथोतय इदं वसो सुतमन्ध इन्द्र नेदीय एदिहि प्रैतु ब्रह्मणस्पतिरग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपः प्र व इन्द्राय बृबत इति प्रथमेनाह्ना समान आतानः सप्तमेऽहनि सप्तमस्याह्नो रूपं कया शुभा सवयसः सनीळा इति सूक्तं न जायमानो नशते न जात इति जातवत्सप्तमेऽहनि सप्तमस्याह्नो रूपं तदु कयाशुभीयमेतद्वै संज्ञानं संतनि सूक्तं यत्कयाशुभीयमेतेन ह वा इन्द्रोऽगस्त्यो मरुतस्ते समजानत तद्यत्कयाशुभीयं शंसति संज्ञात्या एव तद्वायुष्यं तद्योऽस्य प्रियः स्यात्कु-र्यादेवास्य कयाशुभीयं तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते त्यं सु मेषम्महया स्वर्विदमिति सूक्तमत्यं न वाजं हवनस्यदं रथमिति रथवत्सप्तमेऽहनि सप्तमस्याह्नो रूपं तदु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वै तच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानी च मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहत्पृष्ठम्भवति सप्तमेऽहनि यदेव षष्ठस्याह्नस्तद्यद्वै रथंतरं तद्वैरूपं यद्बृहत्तद्वैराजं यद्रथंतरं तच्छाक्वरं यद्बृहत्तद्रैवतं तद्यद्बृहत्पृष्ठम्भवति बृहतैव तद्बृहत्प्रत्युत्तभ्नुवन्त्यस्तोमकृन्तत्राय यद्रथंतरं स्यात्कृन्तत्रं स्यात्तस्माद्बृहदेव कर्तव्यं यद्वावानेति धाय्याच्युताभि त्वा शूर नोनुम इति रथंतरस्य योनिमनु निवर्तयति राथंतरं ह्येतदहरायतनेन पिबा सुतस्य रसिन इति सामप्रगाथः पिबवान्सप्तमेऽहनि सप्तमस्याह्नो रूपम्त्यमू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः १६

इन्द्रस्य नु वीर्याणि प्र वोचमिति सूक्तम्प्रेति सप्तमेऽहनि सप्तमस्याह्नो रूपं तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवतेऽभि त्यम्मेषम्पुरुहूतमृग्मियमिति सुक्तं यद्वाव प्रेति तदभीति सप्तमेऽहनि सप्तमस्याह्नो रूपं तदु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वै तच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथंतरेऽहनि सप्तमेऽहनि सप्तमस्याह्नो रूपमभि त्वा देव सवितरिति सावित्रं यद्वाव प्रेति तदभीति सप्तमेऽहनि सप्तमस्याह्नो रूपम्प्रेतां

यज्ञस्य शम्भुवेति द्यावापृथिवीयम्प्रेति सप्तमेऽहनि सप्तमस्याह्नो रूपमयं देवाय जन्मन इत्यार्भवं जातवत्सप्तमेऽहनि सप्तमस्याह्नो रूपमा याही वनसा सहेति द्विपदाः शंसति द्विपाद्वै पुरुषश्चतुष्पादाः पशवः पशवश्छन्दोमाः पशूना-मवरुद्ध्यै तद्यद्द्विपदाः शंसति यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयत्यैभिरग्ने दुवो गिर इति वैश्वदेवमेति सप्तमेऽहनि सप्तमस्याह्नो रूपं तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहो वैश्वानरो अजीजनदित्या-ग्निमारुतस्य प्रतिपज्जातवत्सप्तमेऽहनि सप्तमस्याह्नो रूपम्प्र यत्वस्त्रिष्टुभमि-षमिति मारुतम्प्रेति सप्तमेऽहनि सप्तमस्याह्नो रूपं जातवेदसे सुनवाम सोममिति जातवेदस्याच्युता दूतं वो विश्ववेदसमिति जातवेदस्यमनिरुक्तं सप्तमेऽहनि सप्तमस्याह्नो रूपं तान्यु गायत्रानि गायत्रतृतीयसवन एष त्र्यहः १७

यद्वै नेति न प्रेति यत्स्थितं तदष्टमस्याह्नो रूपं यद्ध्येव द्वितीयमहस्तदेवै-तत्पुनर्यदष्टमं यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्षमभ्युदितं यद्द्व्यग्नि यन्महद्वद्यद्विहूतवद्यत्पुनर्वद्यत्कुर्व-द्यद्द्वितीयस्याह्नो रूपं एतानि वा अष्टमस्याह्नो रूपाण्यग्निं वो देवमग्निभिः सजोषा इत्यष्टमस्याह्न आज्यम्भवति द्व्यग्न्यष्टमेऽहनि अष्टमस्याह्नो रूपम्तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः कुविदङ्ग नमसा ये वृधासः पीवोअन्नाँ रयिवृधः सुमेधा उछन्नुषसः सुदिना अरिप्रा उशन्ता दूता न दभाय गोपा यावत्तरस्तन्वो यावदोजः प्रति वां सूर उदिते सूक्तैर्धेनुः प्रत्नस्य काम्यं दुहाना ब्रह्मा णा इन्द्रोप याहि विद्वानूर्ध्वो अग्निः सुमतिं वस्वो अश्रेदुत स्या नः सरस्वती जुषाणेति प्रउगम्प्रतिवदन्तर्वद्विहूतवदूर्ध्ववदष्टमेऽहन्यष्टमस्याह्नो रूपं तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहो विश्वानरस्य वस्पतिमिन्द्र इत्सोमपा एक इन्द्र नेदीय एदिह्युत्तिष्ठ ब्रह्मणस्पतेऽग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपो बृहदिन्द्राय गायतेति द्वितीयेनाह्ना समान आतानोऽष्टमेऽहनि अष्टमस्याह्नो रूपम्शंसा महामिन्द्रं यस्मिन्विश्वा इति सूक्तम्महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्महश्चि-त्त्वमिन्द्र यत एतानिति सूक्तम्महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्पिबा सोममभि यमुग्र तर्द इति सूक्तमूर्वं गव्यम्महि गृणान इन्द्रेति महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्महाँ इन्द्रो नृवदा चर्षणिप्रा इति सूक्तम्महद्वदष्टमेऽहनि अष्टमस्याह्नो रूपं तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते तमस्य द्यावापृथिवी सचेतसेति सूक्तं यदैत्कृण्वानो महिमानमिन्द्रियमिति महद्वदष्ट-

मेऽहन्यष्टमस्याह्नो रूपम्तदु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वै तच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै महद्वन्ति सूक्तानि शस्यन्ते महद्वा अन्तरिक्षमन्तरिक्षस्याप्त्यै पञ्च सूक्तानि शस्यन्ते पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्या अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति रथंतरम्पृष्ठम्भवत्यष्टमेऽहनि यद्वावानेति धाय्याच्युता त्वामिद्धि हवामह इति बृहतो योनिमनु निवर्तयति बार्हतं ह्येतदहरायतनेनोभयं शृणवच्च न इति सामप्रगाथो यच्चेदमद्य यदु च ह्य आसीदिति बार्हतेऽहन्यष्टमेऽहनि अष्टमस्याह्नो रूपं त्यमूषु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः १८

अपूर्व्या पुरुतमान्यस्मा इति सूक्तम्महे वीराय तवसे तुरायेति महद्वदष्टमेऽहनि अष्टमस्याह्नो रूपं तां सु ते कीर्तिम्मघवन्महित्वेति सूक्तम्महद्वदष्टमेऽहनि अष्टमस्याह्नो रूपं त्वम्महाँ इन्द्र यो ह शुष्मैरिति सूक्तम्महद्वदष्टमेऽहनि अष्टमस्याह्नो रूपं त्वम्महाँ इन्द्र तुभ्यं ह क्षा इति सूक्तम्महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते दिवश्चिदस्य वरिमा वि पप्रथ इति सूक्तमिन्द्रं न मह्नेति महद्वदष्टमेऽहनि अष्टमस्याह्नो रूपम्तदु जागतां जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वै तच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै महद्वन्ति सूक्तानि शस्यन्ते महद्वा अन्तरिक्षमन्तरिक्षस्याप्त्यै पञ्चपञ्च सूक्तानि शस्यन्ते पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै तानि द्वेधा पञ्चान्यानि पञ्चान्यानि दश सम्पद्यन्ते सा दशिनी विराळन्नम्विराळ् अन्नम्पशवःपशवश्छन्दोमाः पशूनामवरुद्ध्यै विश्वो देवस्य नेतुस्तत्सवितुर्वरेण्यमा विश्वदेवं सत्पतिमिति वैश्वदेवस्य प्रतिपदनुचरौ बार्हतेऽहनि अष्टमेऽहनि अष्टमस्याह्नो रूपं हिरण्यपाणिमूतय इति सावित्रमूर्ध्ववदष्टमेऽहन्यष्टमस्याह्नो रूपम्मही द्यौः पृथिवी च न इति द्यावापृथिवीयम्महद्वदष्टमेऽहनि अष्टमस्याह्नो रूपं युवाना पितरा पुनरित्यार्भवम्पुनर्वदष्टमेऽहनि अष्टमस्याह्नो रूपमिमा नु कम्भुवना सीषधामेति द्विपदाः शंसति द्विपाद्वै पुरुषश्चतुष्पादाः पशवः पशवश्छन्दोमाः पशूनाम-

वरुद्ध्यै तद्यद्द्विपदाः शंसति यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति देवानामिदवो महदिति वैश्वदेवम्महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपं तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यह ऋतावानं वैश्वानरमित्याग्निमारुतस्य प्रतिपदग्निर्वैश्वानरो महानिति महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपं क्रीळं वः शर्धो मारुतमिति मारुतं जम्भे रसस्य वावृध इति वृधन्वदष्टमेऽहन्यष्टमस्याह्नो रूपं जातवेदसे सुनवाम सोममिति जातवेदस्याच्युताग्ने मृळ महाँ असीति जातवेदस्यम्महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपं तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यह एष त्र्यहः १९ ३

## अध्याय २४ खण्डः १-६

यद्वै समानोदर्कं तन्नवमस्याह्नो रूपं यद्ध्येव तृतीह्यमहस्तदेवैतत्पुनर्यौ नवमं यदश्ववद्यदन्तवद्यत्पुनरावृत्तं यत्पुनर्निनृत्तं यद्रतवद्यत्पर्यस्तवद्यत्त्रिवद्यदन्तरूपं यदुत्तमे पदे देवता निरुच्यते यदसौ लोकोऽभ्युदितो यच्छुचिवद्यत्सत्यवद्यत्क्षेतिवद्यद्गतवद्यदोकवद्यत्कृतं यत्तृतीयस्याह्नो रूपमेतानि वै नवमस्याह्नो रूपाण्यगन्म महा नमसा यविष्ठमिति नवमस्याह्न आज्यम्भवति गतवन्नवमेऽहनि नवमस्याह्नो रूपं तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः प्र वीरया शुचयो दद्रिरे ते ते सत्येन मनसा दीध्याना दिवि क्षयन्ता रजसः पृथिव्यामा विश्ववाराश्विना गतं नोऽयं सोम इन्द्र तुभ्यं सुन्व आ तु प्र ब्रह्माणो अङ्गिरसो नक्षन्त सरस्वतीं देवयन्तो हवन्त आ नो दिवो बृहतः पर्वतादा सरस्वत्यभि नो नेषि वस्य इति प्रउगं शुचिवत्सत्यवत्क्षेतिवद्गतवदोकवन्नवमेऽहनि नवमस्याह्नो रूपं तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहस्तंतमिद्राधसे महे त्रय इन्द्रस्य सोमा इन्द्र नेदीय एदिहि प्र नूनम्ब्रह्मणस्पतिरग्निर्नेता त्वं सोमा क्रतुभिः पिन्वन्त्यपो नकिः सुदासो रथमिति तृतीयेनाह्ना समान आतानो नवमेऽहनि नवमस्याह्नो रूपमिन्द्रः स्वाहा पिबतु यस्य सोम इति सूक्तमन्तो वै स्वाहाकारोऽन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपं गायत्साम नभन्यं यथा वेरिति सूक्तमर्चाम तद्वावृधानं स्वर्वदित्यन्तो वै स्वरन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपं तिष्ठा हरी रथ आ युज्यमानेति सूक्तमन्तो वै स्थितमन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपमिमा उ त्वा पुरुतमस्य कारोरिति सूक्तं धियो रथेष्ठामित्यन्तो वै स्थितमन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपं तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते प्र मन्दिने

पितुमदर्चता वच इति सूक्तम्समानोदर्कं नवमेऽहनि नवमस्याह्नो रूपं तदु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वै तच्छन्दो वहति यस्मिन्निव्ल्द्धीयते तस्माज्जगतीषु निविदं दधाति मिथुनानि सूक्तानि सस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै पञ्चा सूक्तानि शस्यन्ते पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहत्पृष्ठम्भवति नवमेऽहनि यद्वावानेति धाय्याच्युताभि त्वा शूर नोनुम इति रथंतरस्य योनि-मनु निवर्तयति राथंतरं ह्येतदहरायतनेनेन्द्र त्रिधातु शरणमिति सामप्रगाथस्त्रिवान्नवमेऽहनि नवमस्याह्नो रूपं त्यमू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः २०

सं च त्वे जग्मुर्गिर इन्द्र पूर्वीरिति सूक्तं गतवन्नवमेऽहनि नवमस्याह्नो रूपं कदा भुवन्रथक्षयाणि ब्रह्मेटि सूक्तं क्षेतिवदन्तरूपं क्षेतीव वा अन्तं गत्वा नवमेऽहनि नवमस्याह्नो रूपमा सत्यो यातु मघवाँ ऋजीषीति सूक्तं सत्यवन्नवमेऽहनि नवमस्याह्नो रूपम्तत्त इन्द्रियम्परमम्पराचैरिति सूक्तमन्तो वै परममन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपं तदु त्रैष्टुभम्तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवतेऽहम्भुवं वसुनः पूर्व्यस्पतिरिति सूक्तमहं धनानि सं जयामि शश्वत इत्यन्तो वै जितमन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपं तदु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वै वच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै पञ्चपञ्च सूक्तानि शस्यन्ते पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै तानि द्वेधा पञ्चान्यानि पञ्चान्यानि दश सम्पद्यन्ते सा दशिनी विराळ् अन्नम्विराळ् अन्नम्पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रति-पदनुचरौ राथंतरेऽहनि नवमेऽहनि नवमस्याह्नो रूपं दोषो आगादिति सावित्रं अन्तो वै गतमन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम्प्र वाम्महिद्यवी अभीति द्यावापृथिवीयं शुची उप प्रशस्तय इति शुचिवन्नवमेऽहनि नवमस्याह्नो रूपमिन्द्र इषे ददातु नस्ते नो रत्नानि धत्तनेत्यार्भवं त्रिरा साप्तानि सुन्वत इति त्रिवन्नवमेऽहनि नवमस्याह्नो रूपाम्बभ्रुरेको विषुणः सूनरो युवेति द्विपदाः

शंसति द्विपाद्वै पुरुषश्चतुष्पादाः पशवः पशवश्छन्दोमाह् पशूनामवरुद्ध्यै तद्यद्द्विपदाः शंसति यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति ये त्रिंशति त्रयस्पर इति वैश्वदेवं त्रिवन्नवमेऽहनि नवमस्याह्नो रूपं तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहो वैश्वानरो न ऊतय इत्याग्निमारुतस्य प्रतिपदा प्र यतु परावत इत्यन्तो वै परावतोऽन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम्मरुतो यस्य हि क्षय इति मारुतं क्षेतिवदन्तरूपं क्षेतीव वा अन्तं गत्वा नवमेऽहनि नवमस्याह्नो रूपं जतवेदसे सुनवाम सोममिति जातवेदस्याच्युता प्राग्नये वाचमीरयेति जातवेदस्यं समानोदर्कं नवमेऽनवमस्याह्नो रूपं स नः पर्षदति द्विषः स नः पर्षदति द्विष इति संसह् बहु वा एतस्मिन्नवरात्रे किंच-किंच वारणं क्रियते शान्त्या एव तद्यत्स नः पर्षदति द्विषः स नः पर्षदति द्विष इति शंसति सर्वस्मादेवैनांस्तदेनसः प्रमुञ्चति तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः २१

पृष्ठ्यं षळहमुपयन्ति यथा वै मुखमेवम्पृष्ठ्यः षळहस्तद्यथान्तरम्मुखस्य जिह्वा तालु दन्ता एवं छन्दोमा अथ येनैव वाचं व्याकरोति येन स्वादु चास्वादु च विजानाति तद्दशममहर्यथा वै नासिके एवम्पृष्ठ्यः षळहस्तद्यथान्तरम्ना-सिकयोरेवं छन्दोमा अथ येनैव गन्धान्विजानाति तद्दशममहर्यथा वा अक्ष्येवम्पृष्ठ्यः षळहस्तद्यथान्तरमक्ष्णः कृष्णमेवं छन्दोमा अथ यैव कनीनिका येन पश्यति तद्दशममहर्यथा वै कर्ण एवम्पृष्ठ्यः षळहस्तद्यथान्तरं कर्णस्यैवं छन्दोमा अथ येनैव शृणोति तद्दशममहः श्रीर्वै दशममहः श्रियं वा एत आगछन्ति ये दशममहरागछन्ति तस्माद्दशममहरविवाक्यम्भवति मा श्रियो-ऽववादिष्मेति दुरववदं हि श्रेयसस्ते ततः सर्पन्ति ते मार्जयन्ते ते पत्नीशालां सम्प्रपद्यन्ते तेषां य एतामाहुतिं विद्यात्स ब्रूयात्समन्वारभध्वमिति स जुहु-यादिह रमेह रमध्वमिह धृतिरिह स्वधृतिरग्ने वाट्स्वाहा वाळ् इति स यदिह रमेत्याहास्मिन्नेवैनांस्तल्लोके रमयतीह रमध्वमिति यदाह प्रजामेवैषु तद्रम-यतीह धृतिरिह स्वधृतिरिति यदाह प्रजां चैव तद्वाचं च यजमानेषु दधात्यग्ने वाळिति रथंतरम्स्वाहा वाळ् इति बृहद्देवानां वा एतन्मिथुनं यद्बृहद्रथंतरे देवानामेव तन्मिथुनेन मिथुनमवरुन्धते देवानाम्मिथुनेन मिथुनम्प्रजायन्ते प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद ते ततः सर्पन्ति ते मार्जयन्ते त आग्नीध्रं सम्प्रपद्यन्ते तेषां य एतामाहुतिं विद्यात्स ब्रूयत्समन्वारभध्वमिति स जुहुया-

दुपसृजन्धरुणम्मातरं धरुणो धयन्नायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेति रायस्पोषमिषमूर्जमवरुन्द्ध आत्मने च यजमानेभ्यश्च यत्रैवं विद्वानेतामाहुतिं जुहोति २२

ते ततः सर्पन्ति ते सदः सम्प्रपद्यन्ते यथायथमन्य ऋत्विजो व्युत्सर्पन्ति संसर्पन्त्युद्गातारस्ते सर्पराज्ञ्या ऋक्षु स्तुवत इयं वै सर्पराज्ञीयं हि सर्पतो राज्ञीयं वा अलोमिकेवाग्र आसीत्सैतम्मन्त्रमपश्यदायं गौः पृश्निरक्रमीदिति ताम-यम्पृश्निर्वर्ण आविशन्नानारूपो यंयं काममकामयत यदिदं किंचौषधयो वन-स्पतयः सर्वाणि रूपाणि प्रिश्निरेनं वर्ण आविशति नानारूपो यंयं कामं कामयते य एवं वेद मनसा प्रस्तौति मनसोद्गायति मनसा प्रतिहरति वाचा शंसति वाक्च वै मनश्च देवानाम्मिथुनं देवानामेव तन्मिथुनेन मिथुनमवरुन्धते देवानाम्मिथुनेन मिथुनम्प्रजायन्ते प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेदाथ चतुर्होतृन्होता व्याचष्टे तदेव तत्स्तुतमनुशंसति देवानां वा एतद्यज्ञियं गुह्यं नाम यच्चतुर्होतारस्तद्यच्चतुर्होतृन्होता व्याचष्टे देवानामेव तद्यज्ञियं गुह्यं नाम प्रकाशं गमयति तदेनम्प्रकाशं गतम्प्रकाशम्गमयति गछति प्रकाशं य एवं वेद यम्ब्राह्मणमनूचानं यशो नर्छेदिति ह स्माहारण्यम्परेत्य दर्भस्तम्बानुद्ग्रथ्य दक्षिणतो ब्रह्माणमुपवेश्य चतुर्होतृन्व्याचक्षीत देवानां वा एतद्यज्ञियं गुह्यं नाम यच्चतुर्होतारस्तद्यच्चतुर्होतृन्व्याचक्षीत देवानामेव तद्यज्ञियं गुह्यं नाम प्रकाशं गमयति तदेनम्प्रकाशं गतम्प्रकाशं गमयति गछति प्रकाशं य एवं वेद २३

अथौदुम्बरीं समन्वारभन्त इषमूर्जमन्वारभ इत्यूर्ग्वा अन्नाद्यमुदुम्बरो यद्वै तद्देवा इषमूर्जं व्यभजन्त तत उदुम्बरः समभवत्तस्मात्स त्रिः संवत्सरस्य पच्यते तद्यदौदुम्बरीम्समन्वारभन्त इषमेव तदूर्जमन्नाद्यं समन्वारभन्ते वाचं यछन्ति वाग्वै यज्ञो यज्ञमेव तद्यछन्त्यहर्नियछन्त्यहर्वै स्वर्गो लोकः स्वर्गमेव तल्लोकं नियछन्ति न दिवा वाचं विसृजेरन्यद्दिवा वाचं विसृजेरन्नहर्भ्रातृव्याय परिशिंष्युर्न नक्तं वाचं विसृजेरन्यन्नक्तं वाचं विसृजेरन्रात्रीम्भ्रातृव्याय परिशिंष्युः समयाविषितः सूर्यः स्यादथ वाचं विसृजेरंस्तावन्तमेव तद्द्विषते लोकम्परिशिंषन्त्यथो खल्वस्तमित एव वाचं विसृजेरंस्तमोभाजमेव तद्द्वि-षन्तम्भ्रातृव्यं कुर्वन्त्याहवनीयम्परीत्य वाचं विसृजेरन्यज्ञो वा आहवनीयः स्वर्गो लोक आहवनीयो यज्ञेनैव तत्स्वर्गेण लोकेन स्वर्गं लोकं यन्ति

यदिहोनमकर्म यदत्यरीरिचाम प्रजापतिं तत्पितरमप्येत्विति वाचं विसृजन्ते प्राजपतिं वै प्रजा अनुप्रजायन्ते प्रजापतिरूनातिरिक्तयोः प्रतिष्ठा नैनानूनां नातिरिक्तं हिनस्ति प्रजापतिमेवोनातिरिक्तान्यभ्यत्यर्जन्ति य एवं विद्वांस एतेन वाचं विसृजन्ते तस्मादेवं विद्वांस एतेनैव वाचं विसृजेरन् २४

अध्वर्यो इत्याह्वयते चतुर्होतृषु वदिष्यमाणस्तदाहावस्य रूपमों होतस्तथा होतरित्यध्वर्युः प्रतिगृणात्यवसितेऽवसिते दशसु पदेषु तेषां चित्तिः स्रुगासीत्चित्तमाज्यमासीत्वाग्वेदिरासीताधीतम्बर्हिरासीत्केतो अग्निरासी- त्विज्ञातमग्नीदासीत्प्राणो हविरासीत्सामाध्वर्युरासीत्वाचस्पतिर्होतासीत्मन उपवक्तासीत्ते वा एतं ग्रहमगृह्णत वाचस्पते विधे नामन् विधेम ते नाम विधेस्त्वमस्माकं नाम्ना द्यां गछ यां देवाः प्रजापतिगृहपतय ऋद्धिमरा- ध्नुवंस्तामृद्धिं रात्स्यामोऽथ प्रजापतेस्तनूरनुद्रवति ब्रह्मोद्यं चान्नादा चान्नपत्नी चान्नादा तदग्निरन्नपत्नी तदादित्यो भद्रा च कल्याणी चा भद्रा तत्सोमः कल्याणी तत्पशावोऽनिलया चापभया चानिलया तद्वायुर्न ह्येष कदा चनेलयत्यपभया तन्मृत्युः सर्वं ह्येतस्माद्बीभायानाप्ता चानाप्या चानाप्ता तत्पृथिव्यनाप्या त- द्द्यौरनाधृष्या चाप्रतिधृष्या चानाधृष्या तदग्निरप्रतिधृष्या तदादित्योऽपूर्वा चाभ्रातृव्या चापूर्वा तन्मानोऽभ्रातृव्या तत्संवत्सर एता वाव द्वादश प्रजापतेस्तन्व एष कृत्स्नः प्रजापतिस्तत्कृत्स्नम्प्रजापतिमाप्नोति दशममहरथ ब्रह्मोद्यम्वदन्त्यग्निर्गृहपतिरिति हैक आहुः सोऽस्य लोकस्य गृहपतिर्वा- युर्गृहपतिरिति हैक आहुः सोऽन्तरिक्षलोकस्य गृहपतिरसौ वै गृहपतिर्योऽसौ तपत्येष पतिरृतवो गृहा येषां वै गृहपतिं देवं विद्वान्गृहपतिर्भवति राध्नोति स गृहपतिं राध्नुवन्ति ते यजमाना येषां वा अपहतपाप्मानं देवं विद्वा- न्गृहपतिर्भवत्यप स गृहपतिः पाप्मानं हतेऽप ते यजमानाः पाप्मानं घ्नतेऽध्वर्यो अरात्स्मारात्स्म २५ ४

## अध्याय २५ खण्डः १-६

उद्धराहवनीयमित्यपराह्ण आह यदेवाह्ना साधु करोति तदेव तत्प्राङुद्धृत्य तदभये निधत्त उद्धराहवनीयमिति प्रातराह यदेव रात्र्या साधु करोति तदेव तत्प्राङुद्धृत्य तदभये निधत्ते यज्ञो वा आहवनीयः स्वर्गो लोक आहवनीयो यज्ञ एव तत्स्वर्गे लोके स्वर्गं लोकं निधत्ते य एवं वेद यो वा अग्निहोत्रं वैश्वदेवं

षोळशकलम्पशुषु प्रतिष्ठितं वेद वैश्वदेवेनाग्निहोत्रेण षोळशकलेन पशुषु प्रतिष्ठितेन राध्नोति रौद्रं गवि सद्वायव्यमुपावसृष्टमाश्विनं दुह्यमानं सौम्यं दुग्धं वारुणमधिश्रितम्पौष्णं समुदन्तम्मारुतं विष्यन्दमानं वैश्वदेवम्बिन्दुमन्मैत्रं शरोगृहीतं द्यावापृथिवीयमुद्वासितं सावित्रम्प्रक्रान्तं वैष्णवं ह्रियमाणम्बार्हस्पत्यमुपसन्नमग्नेः पूर्वाहुतिः प्रजापतेरुत्तरैन्द्रं हुतमेतद्वा अग्निहोत्रं वैश्वदेवं षोळशकलम्पशुषु प्रतिष्ठितं वैश्वदेवेनाग्निहोत्रेण षोळशकलेन पशुषु प्रतिष्ठितेन राध्नोति य एवं वेद २६

यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत्का तत्र प्रायश्चित्तिरिति तामभिमन्त्रयेत यस्माद्भीषा निषीदसि ततो नो अभयं कृधि पशून्नः सर्वान्गोपाय नमो रुद्राय मीळ्हुष इति तामुत्थापयेदुदस्थाद्देव्यदितिरायुर्यज्ञपतावधातिन्द्राय कृण्वती भागम्मित्राय वरुणाय चेत्यथास्या उदपात्रमूधसि च मुखे चोपगृह्णीयादथैनाम्ब्राह्मणाय दद्यात्सा तत्र प्रायश्चित्तिर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना वाश्येत का तत्र प्रायश्चित्तिरित्यशनायां ह वा एष यजमानस्य प्रतिख्याय वाश्यते तामन्नमप्यादयेच्छान्त्यै शान्तिर्वा अन्नं सूयवसाद्भगवती हि भूया इति सा तत्र प्रायश्चित्तिर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्पन्देत का तत्र प्रायश्चित्तिरिति सा यत्तत्र स्कन्दयेत्तदभिमृश्य जपेद्यदद्य दुग्धम्पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः पयो गृहेषु पयो अघ्न्यायाम्पयो वत्सेषु पयो अस्तु तन्मायिति तत्र यत्परिशिष्टं स्यात्तेन जुहुयाद्यदलं होमाय स्याद्यद्यु वै सर्वं सिक्तं स्यादथान्यामाहूय तां दुग्ध्वा तेन जुहुयादा त्वेव श्रद्धायै होतव्यां सा तत्र प्रायश्चित्तिः सर्वं वा अस्य बर्हिष्यं सर्वम्परिगृहीतं य एवं विद्वानग्निहोत्रं जुहोति २७

असौ वा अस्यादित्यो यूपः पृथिवी वेदिरोषधयो बर्हिर्वनस्पतय इध्मा आपः प्रोक्षणयो दिशः परिधयो यद्ध वा अस्य किंच नश्यति यन्म्रियते यदपाजन्ति सर्वं हैवनं तदमुष्मिँल्लोके यथा बर्हिषि दत्तमागछेदेवमागछति य एवं विद्वानग्निहोत्रं जुहोत्युभयान्वा एष देवमनुष्यान्विपर्यासं दक्षिणा नयति सर्वं चेदं यदिदं किंच मनुष्यान्वा एष सायमाहुत्या देवेभ्यो दक्षिणा नयति सर्वं चेदं यदिदं किंच त एते प्रलीना न्योकस इव शेरे मनुष्या देवेभ्यो दक्षिणा नीता देवान्वा एष प्रातराहुत्या मनुष्येभ्यो दक्षिणा नयति सर्वं चेदं यदिदं किंच

त एते विविदाना इवोत्पतन्त्यदोऽहं करिष्येऽदो हं गमिष्यामीति वदन्तो यावन्तं ह वै सर्वमिदं दत्त्वा लोकं जयति तावन्तं ह लोकं जयति य एवं विद्वानग्निहोत्रं जुहोत्यग्नये वा एष सायमाहुत्याश्विनमुपाकरोह् तद्वाक्प्रतिगृणाति वाग्-वागित्यग्निना हास्य रात्र्याश्विनं शस्तम्भवति य एवं विद्वानग्निहोत्रं जुहो-त्यादित्याया वा एष प्रातराहुत्या महाव्रतमुपाकरोति तत्प्राणः प्रतिगृणा-त्यन्नमन्नमित्यादित्येन हास्याह्ना महाव्रतं शस्तम्भवति य एवं विद्वानग्निहोत्रं जुहोति तस्य वा एतस्याग्निहोत्रस्य सप्त च शतानि विंशतिश्च संवत्सरे सायमाहुतयः सप्त चो एव शतानि विंशतिश्च संवत्सरे प्रातराहुत-यस्तावत्योऽग्नेर्यजुष्मत्य इष्टकाः संवत्सरेण हास्याग्निना चित्येनेष्टम्भवति य एवं विद्वानग्निहोत्रं जुहोति २८

वृषशुष्मो ह वातावत उवाच जातूकर्ण्यो वक्ता स्मो वा इदं देवेभ्यो यद्वै तदग्निहोत्रमुभयेद्युरहूयतान्येदुर्वाव तदेतर्हि हूयत इत्येतदु होवाच कुमारी गन्धर्वगृहीता वक्ता स्मो वा इदम्पितृभ्यो यद्वै तदग्निहोत्रमुभयेद्युरहूयता-न्येदुर्वाव तदेतर्हि हूयत इत्येतद्वा अग्निहोत्रमन्येद्युर्हूयते यदस्तमिते सायं जुहोत्यनुदिते प्रातरथैतदग्निहोत्रमुभयेद्युर्हूयते यदस्तमिते सायं जुहोत्युदिते प्रातस्तस्मादुदिते होतव्यं चतुर्विंशे ह वै संवत्सरेऽनुदितहोमि गायत्रीलोक-माप्नोति द्वादश उदीतहोमि स यदा द्वौ संवत्सरावनुदिते जुहोत्यथ हास्यैको हुतो भवत्यथ य उदिले जुहोति संवत्सरेणैव संवत्सरमाप्नोति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यमेष ह वा अहोरात्रयोस्तेजसि जुहोति योऽस्तमिते सायं जुहोत्युदिते प्रातरग्निना वै तेजसा रात्रिस्तेजस्वत्यादित्येन तेजसाहस्तेजस्वदहोरात्रयोर्हास्य तेजसि हुतम्भवति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम् २९

एते ह वै संवत्सरस्य चक्रे यदहोरात्रे ताभ्यामेव तत्संवत्सरमेति स योऽनुदिते जुहोति यथैकतश्चक्रेण यायात्तादृक्तदथ य उदिते जुहोति यथोभयतश्चक्रेण यान्क्षिप्रमध्वानं समश्नुवीत तादृक्तत्तदेषाभि यज्ञगाथा गीयते बृहद्रथंतरा-भ्यामिदमेति युक्तं यद्भूतं भविष्यच्चापि सर्वं ताभ्यामियादग्नीनाधाय धीरो दिवैवान्यज्जुहुयान्नक्तमन्यद् इति राथम्तरी वै रात्र्यहर्बार्हतमग्निर्कै रथंतरमा-दित्यो बृहदेते ह वा एनं देवते ब्रध्नस्य विष्टपं स्वर्गं लोकं गमयतो य एवं

विद्वानुदिते जुहोति तस्मादुदिते होतव्यं तदेषाभि यज्ञगाथा गीयते यथा ह वा स्थूरिणैकेन यायादकृत्वान्यदुपयोजनाय एवं यन्ति ते बहवो जनासः पुरोदयाज्जुह्वति येऽग्निहोत्रम् इति तां वा एतां देवताम्प्रयतीं सर्वमिदमनुप्रैति यदिदं किंचैतस्यै हीदं देवताया अनुचरं सर्वं यदिदं किंच सैषानुचरवती देवता विन्दते ह वा अनुचरम्भवत्यस्यानुचरो य एवं वेद स वा एष एकातिथिः स एष जुह्वत्सु वसति तद्यददो गाथा भवति ११

अनेनसमेनसा सोऽभिशस्तादेनस्वतो वापहरादेनः एकातिथिमप सायं रुणद्धि बिसानि स्तेनो अप सो जहारेत्य् एष ह वै स एकातिथिः स एष जुह्वत्सु वसत्येतं वाव स देवतामपरुणद्धि योऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोति तमेषा देवतापरोद्धापरुणद्धयस्माच्च लोकादमुष्माच्चोभाभ्यां योऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोति तस्माद्योऽलमग्निहोत्राय स्याज्जुहुयात्तस्मादाहुर्न सायमतिथिरपरुध्य इत्येतद्ध स्म वै तद्विद्वान्नगरी जानश्रुतेय उदितहोमिनमैकादशाक्षम्मानुतन्तव्यमुवाच प्रजायामेनं विज्ञाता स्मो यदि विद्वान्वा जुहोत्यविद्वान्वेति तस्यो हैकादशाक्षे राष्ट्रमिव प्रजा बभूव राष्ट्रमिव ह वा अस्य प्रजा भवति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम् ३०

उद्यन्नु खलु वा आदित्य आहवनीयेन रश्मीन्संदधाति स योऽनुदिते जुहोति यथा कुमाराअ वा वत्साय वाजाताय स्तनम्प्रतिदध्यात्तादृक्तदथ य उदिते जुहोति यथा कुमाराय वा वत्साय वा जाताय स्तनम्प्रतिदध्यात्तादृक्तत्तमस्मै प्रतिधीयमानमुभयोर्लोकयोरन्नाद्यमनु प्रतिधीयतेऽस्माच्च लोकादमुष्मच्चोभाभ्यां स योऽनुदिते जुहोति यथा पुरुषाय वा हस्तिने वाप्रयते हस्त आदध्यात्ताद्रिक्तदथ य उदिते जुहोति यथा पुरुषाय वा हस्तिने वा प्रयते हस्त आदध्यात्तादृक्तत्तमेष एतेनैव हस्तेनोर्ध्वं हृत्वा स्वर्गे लोक आदधाति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यमुद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति तस्मादेनम्प्राण इत्याचक्षते प्राणे हास्य सम्प्रति हुतम्भवति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यमेष ह वै सत्यं वदन्सत्ये जुहोति योऽस्तमिते सायं जुहोत्युदिते प्रातर्भूर्भुवः स्वरोमग्निर्ज्योतिर्ज्योतिरग्निरिति सायं जुहोति भूर्भुवः स्वरों सूर्यो ज्योतिर्ज्योतिः सूर्य इति प्रातः सत्यं हास्य वदतः सत्ये हुतम्भवति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यं तदेषाभि

यज्ञगाथा गीयते प्रताःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्दिवा कीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम् इति ३१

प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति स तापोऽतप्यत स तपस्तप्त्वे-माँल्लोकानसृजत पृथिवीमन्तरिक्षं दिवं ताँल्लोकानभ्यतपत्तेभ्योऽभित-प्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवस्तानि ज्योतींष्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्तान्वेदानभ्यतपत्तेभ्यो-ऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्येव ऋग्वेदादजायत भुव इति यजुर्वे-दात्स्वरिति सामवेदात्तानि शुक्राण्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अ-जायन्ताकार उकारो मकार इति तानेकधा समभरत्तदेतदोमिति तस्मादोम्-ओमिति प्रणौत्योमिति वै स्वर्गो लोक ओमित्यसौ योऽसौ तपति स प्रजापतिर्यज्ञमतनुत तमाहरत्तेनायजत स ऋचैव हौत्रमकरोद्यजुषाध्वर्यवं साम्नोद्गीथं यदेतत्त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकरोत्स प्रजापतिर्यज्ञं देवेभ्यः सम्प्रायछत्ते देवा यज्ञमतन्वत तमाहरन्त तेनायजन्त त ऋचैव हौत्रम-कुर्वन्यजुषाध्वर्यवं साम्नोद्गीथं यदेवैतत्त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकुर्वंस्ते देवा अब्रुवन्प्रजापतिं यदि नो यज्ञ ऋक्त आर्तिः स्याद्यदि यजुष्टो यदि सामतो यद्यविज्ञाता सर्वव्यापद्वा का प्रायश्चित्तिरिति स प्रजापतिरब्रवीद्देवान्यदि वो यज्ञ ऋक्त आर्तिर्भवति भूरिति गार्हपत्ये जुहवाथ यदि यजुष्टो भुव इत्या-ग्नीध्रीयेऽन्वाहार्यपचने वा हविर्यज्ञेषु यदि सामतः स्वरित्याहवनीये यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रुत्याहवनीय एव जुहवा-थेत्येतानि ह वै वेदानामन्तःश्लेषणानि यदेता व्याहृतयस्तद्यथात्मनात्मानं संदध्याद्यथा पर्वणा पर्व यथा श्लेष्मणा चर्मण्यं वान्यद्वा विश्लिष्टं संश्लेषयेदेवमेवैताभिर्यज्ञस्य विश्लिष्टं संदधाति सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतयस्तस्मादेषैव यज्ञे प्रायश्चित्तिः कर्तव्या ३२

तदाहुर्महावदाः यदृचैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियत इति त्रय्या विद्ययेति ब्रूयादयं वै यज्ञो योऽयम्पवते तस्य वाक्च मनश्च वर्तन्यौ वाचा च हि मनसा च यज्ञो वर्तत इयं वै वागदो मनस्तद्वाचा त्रय्या विद्ययैकम्पक्षं संस्कुर्वन्ति मनसैव ब्रह्मा

संस्करोति ते हैके ब्रह्माण उपाकृते प्रातरनुवाके स्तोमभागाञ्जपित्वा भाषमाणा उपासते तद्धैतदुवाच ब्राह्मण उपाकृते प्रातरनुवाके ब्रह्माणम्भाषमानं दृष्ट्वार्धमस्य यज्ञस्यान्तरगुरिति तद्यथैकपात्पुरुषो यन्नेकतश्चक्रो वा रथो वर्तमानो भ्रेषं न्येत्येवमेव स यज्ञो भ्रेषं न्येति यज्ञस्य भ्रेषमनु यजमानो भ्रेषं न्येति तस्माद्ब्रह्मोपाकृते प्रातरौवाके वाचंयमः स्यादोपांश्वन्तर्यामयोर्होमादुपाकृतेषु पवमानेष्वोदृचोऽथ यानि स्तोत्राणि सशस्त्राणया तेषां वषट्काराद्वाचंयम एव स्यात्तद्यथोभयतःपात्पुरोषो यन्नुभयतश्चक्रो वा रथो वर्तमानो न रिष्यत्येवमेव स यज्ञो न रिष्यति यज्ञस्यारिष्टिमनु यजमानो न रिष्यति ३३

तदाहुर्यद्ब्रहान्मेऽग्रहीत्प्राचारीन्म आहुतीर्मेऽहौषीदित्यध्वर्यवे दक्षिणा नीयन्त उदगासीन्म इत्युद्गात्रेऽन्ववोचन्मेऽशंसीन्मेऽयाक्षीन्म इति होत्रे किं स्विदेव चक्रुषे ब्रह्मणे दक्षिणा नीयन्तेऽकृत्वाहो स्विदेव हरन्ता इति यज्ञस्य हैष भिषग्यद्ब्रह्मा यज्ञायैव तद्भेषजं कृत्वा हरत्यथो यद्भूयिष्ठेनैव ब्रह्मणा छन्दसां रसेनार्त्विज्यं करोति यद्ब्रह्मा तस्माद्ब्रह्मार्धभाग्घ वा एष इतरेषामृत्विजामग्र आस यद्ब्रह्मार्धमेव ब्रह्मण आसार्धमितरेषामृत्विजां तस्माद्यदि यज्ञ ऋक्त आर्तिः स्याद्यदि यजुष्टो यदि सामतो यद्यविज्ञाता सर्वव्यापद्वा ब्रह्मण एव निवेदयन्ते तस्माद्यदि यज्ञ ऋक्त आर्तिर्भवति भूरिति ब्रह्मा गार्हपत्ये जुहुयाद्यदि यजुष्टो भुव इत्याग्नीध्रीयेऽन्वाहार्यपचने वा हविर्यज्ञेषु यदि सामतः स्वरित्याहवनीये यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रु-त्याहवनीय एव जुहुयत्स प्रस्तोतोपाकृते स्तोत्र आह ब्रह्मन्स्तोष्यामः प्रशा-स्तरिति स भूरिति ब्रह्मा प्रातःसवने ब्रूयादिन्द्रवन्तः स्तुध्वमिति भुव इति माध्यंदिने सवने ब्रूयादिन्द्रवन्तः स्तुध्वमिति स्वरिति तृतीयसवने ब्रूयादि-न्द्रवन्तः स्तुध्वमिति भूर्भुवः स्वरित्युक्थे वातिरात्रे वा ब्रूयादिन्द्रवन्तः स्तुध्वमिति स यदाहेन्द्रवन्तः स्तुध्वमित्यैन्द्रो वै यज्ञ इन्द्रो यज्ञस्य देवता सेन्द्रमेव तदुद्गीथं करोतीन्द्रान्मा गादिन्द्रवन्तः स्तुध्वमिति एवैनांस्तदाह तदाह ३४ ५

इति पञ्चमपञ्चिका समाप्ता

## पञ्चिका ६

## अध्याय २६ खण्डः १-३

देवा ह वै सर्वचरौ सत्रं निषेदुस्ते ह पाप्मानं नापजघ्निरे तान्होवाचार्बुदः काद्रवेयः सर्पऋषिर्मन्त्रकृदेका वै वो होत्राकृता तां वोऽहं करवाण्यथ पाप्मानमपहनिष्यध्व इति ते ह तथेत्यूचुस्तेषां ह स्म स मध्यंदिने-मध्यंदिन एवोपोदासर्पन्ग्राव्णोऽभिष्टौति तस्मान्मध्यंदिनेमध्यंदिन एव ग्राव्णोऽभिष्टुवन्ति तदनुकृति स ह स्म येनोपोदासर्पत्तद्धाप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति तान्ह राजा मदयां चकार ते होचुराशीविषो वै नो राजानमवेक्षते हन्तास्योष्णीषेणाक्ष्यावपिनह्यामेति तथेति तस्य होष्णीषेणाक्ष्यावपिनेहुस्तस्मादुष्णीषमेव पर्यस्य ग्राव्णोऽभिष्टुवन्ति तदनुकृति तान्ह राजा मदयामेव चकार ते होचुः स्वेन वै नो मन्त्रेण ग्राव्णोऽभिष्टौतीति हन्तास्यान्याभिर्ऋृग्भिर्मन्त्रमापृनचामेति तथेति तस्य हान्याभिर्ऋृग्भिर्मन्त्रमापपृचुस्ततो हैनान्न मदयां चकार तद्य-दस्यान्याभिर्ऋृग्भिर्मन्त्रमापृञ्चन्ति शान्त्या एव ते ह पाप्मानमपजघ्निरे तेषाम-न्वपहतिं सर्पाः पाप्मानमपजघ्निरे त एतेऽपहतपाप्मानो हित्वा पूर्वां जीर्णां त्वचं नवयैव प्रयन्त्यप पाप्मानं हते य एवं वेद १

तदाहुः कियतीइभिरभिष्टुयादिति शतेनेत्याहुः शतायुर्वै पुरुषः शतवीर्यः शते-न्द्रिय आयुष्येवैनं तद्वीर्य इन्द्रिये दधाति त्रयस्त्रिंशता वेत्याहुस्त्रयस्त्रिंशतो वै स देवानाम्पाप्मनोऽपाहंस्त्रयस्त्रिंशद्वै तस्य देवा इत्यपरिमिताभिरभिष्टुया-दपरिमितो वै प्रजापतिः प्रजापतेर्वा एषा होत्रा यद्ग्रावस्तोत्रीया तस्यां सर्वे कामा अवरुध्यन्ते स यदपरिमिताभिरभिष्टौति सर्वेषां कामानामवरुद्ध्यै सर्वान्का-मानवरुन्द्धे य एवं वेद तस्मादपरिमिताभिरेवाभिष्टुयात्तदाहुः कथमभि-ष्टुयादित्यक्षरशाः चतुरक्षरशाः पच्छाः अर्धर्चशाः ऋक्शाः इति तद्यदृक्शो न तदवकल्पतेऽथ यत्पच्छो नो एव तदवकल्पतेऽथ यदक्षरशश्चतुरक्षरशो वि तथा छन्दांसि लुप्येरन्बहूनि तथाक्षराणि हीयेरन्नर्धर्चश एवाभिष्टुयात्प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजामनमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति तस्मादर्धर्चश एवाभिष्टुयात्तदाहुर्यन्मध्यंदिनेमध्यंदिन एव ग्रा-व्णोऽभिष्टौति कथमस्येतरयोः सवनयोरभिष्टुतम्भवतीति यदेव गायत्रीभि-रभिष्टौति गायत्रं वै प्रातःसवनं तेन प्रातःसवने ऽथ यज्जगतीभिरभिष्टौति जागतं वै तृतीयसवनं तेन तृतीयसवन एवमु हास्य मध्यंदिनेमध्यंदिन एव

ग्राव्णोऽभिष्टुवतः सर्वेषु सवनेष्वभिष्टुतम्भवति य एवं वेद तदाहुर्यदध्वर्युरेवान्यानृत्विजः सम्प्रेष्यात्यथ कस्मादेष एतामसम्प्रेषितः प्रतिपद्यत इति मनो वै ग्रावस्तोत्रीयसम्प्रेषितं वा इदम्मनस्तस्मादेष एतामसम्प्रेषितः प्रतिपद्यते २

वाग्वै सुब्रह्मराया तस्यै सोमो राजा वत्सह् सोमे राजनि क्रीते सुब्रह्मरायामाह्वयन्ति यथा धेनुमुपह्वयेत्तेन वत्सेन यजमानाय सर्वान्कामान्दुहे सर्वान्हास्मै कामान्वाग्दुहे य एवं वेद तदाहुः किं सुब्रह्मरायायै सुब्रह्मरायात्वमिति वागेवेति ब्रूयाद्वाग्वै ब्रह्म च सुब्रह्म चेति तदाहुरथ कस्मादेनम्पुमांसं सन्तं स्त्रीमिवाचद्मत इति वाग्घि सुब्रह्मरायेति ब्रूयात्तेनेति तदाहुर्यदन्तर्वेदीतर ऋत्विज आर्त्विज्यं कुर्वन्ति बहिर्वेदि सुब्रह्मराया कथमस्यान्तर्वेद्यार्त्विज्यं कृतम्भवतीति वेदेर्वा उत्करमुत्किरन्ति यदेवोत्करे तिष्ठन्नाह्वयतीति ब्रूयात्तेनेति तदाहुरथ कस्मादुत्करे तिष्ठन्सुब्रह्मरायामाह्वयतीत्यृषयो वै सत्रमासत तेषां यो वर्षिष्ठ आसीत्तमब्रुवन्सुब्रह्मरायामाह्वय त्वं नो नेदिष्ठाद्देवान्ह्वयिष्यसीति वर्षिष्ठमेवैनं तत्कुर्वन्त्यथो वेदिमेव तत्सर्वाम्प्रीणाति तदाहुः कस्मादस्मा ऋषभं दद्मिणामभ्याजन्तीति वृषा वा ऋषभो योषा सुब्रह्मराया तन्मिथुनं तस्य मिथुनस्य प्रजात्या इत्युपांशु पात्नीवतस्याग्नीध्रो यजति रेतो वै पात्नीवत उपांश्विव वै रेतसः सिक्तिर्नानुवषट्करोति संस्था वा एषा यदनुवषट्कारो नेद्रेतः संस्थापयानीत्यसंस्थितं वै रेतसः समृद्धं तस्मान्नानुवषट्करोति नेष्टुरुपस्थ आसीनो भद्मयति पन्तीभाजनं वै नेष्टाग्निः पत्नीषु रेतो दधाति प्रजात्या अग्निनैव तत्पत्नीषु रेतो दधाति प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद दद्मिणा अनु सुब्रह्मराया संतिष्ठते वाग्वै सुब्रह्मरायान्नं दद्मिणान्नाद्य एव तद्वाचि यज्ञमन्ततः प्रतिष्ठापयन्ति प्रतिष्ठापयन्ति ३ १

## अध्याय २७ खराडः १-५

देवा वै यज्ञमतन्वत तांस्तन्वानानसुरा अभ्यायन्यज्ञवेशसमेषां करिष्याम इति तान्दद्मिणात उपायन्यत एषां यज्ञस्य तनिष्ठममन्यन्त ते देवाः प्रतिबुध्य मित्रावरुणौ दद्मिणातः पर्यौहंस्ते मित्रावरुणाभ्यामेव दद्मिणतः प्रातःसवनेऽसुररद्मांस्यपाघ्नत तथैवैतद्यजमाना मित्रावरुणाभ्यामेव दद्मिणतः प्रातःसवनेऽसुररद्मांस्यपघ्नते तस्मान्मैत्रावरुणम्मैत्रावरुणः प्रातःसवने शंसति मित्रावरुणाभ्यां हि देवा दद्मिणतः प्रातःसवनेऽसुररद्मांस्यपाघ्नत ते वै दद्मिण-

तोऽपहता असुरा मध्यतो यज्ञम्प्राविशंस्ते देवाः प्रतिबुध्येन्द्रम्मध्यतोऽदधुस्त इन्द्रेणैव मध्यतः प्रातःसवनेऽसुररक्षांस्यपाघ्नत तथैवैतद्यजमाना इन्द्रेणैव मध्यतः प्रातःसवनेऽसुररक्षांस्यपघ्नते तस्मादैन्द्रम्ब्राह्मणाच्छंसी प्रातःसवने शंसतीन्द्रेण हि देवा मध्यतः प्रातःसवनेऽसुररक्षांस्यपाघ्नत ते वै मध्यतोऽपहता असुरा उत्तरतो यज्ञम्प्राविशंस्ते देवाः प्रतिबुध्येन्द्राग्नी उत्तरतः पर्यौहंस्त इन्द्राग्निभ्यां एवोत्तरतः प्रातःसवनेऽसुरराक्षांस्यपाघ्नत तथैवैतद्यजमाना इन्द्राग्निभ्यामेवोत्तरतः प्रातःसवनेऽसुररक्षांस्यपघ्नते तस्मादैन्द्राग्नमछावाकः प्रातःसवने शंसतीन्द्राग्निभ्यां हि देवा उत्तरतः प्रातःसवनेऽसुररक्षांस्यपाघ्नत ते वा उत्तरतोऽपहता असुराः पुरस्तात्पर्यद्रवन्समनीकतस्ते देवाः प्रतिबुध्याग्निम्पुरस्तात्प्रातःसवने पर्यौहंस्तेऽग्निनैव पुरस्तात्प्रातःसवनेऽसुररक्षांस्यपाघ्नत तथैवैतद्यजमाना अग्निनैव पुरस्तात्प्रातःसवनेऽसुररक्षांस्यपघ्नते तस्मादाग्नेयम्प्रातःसवनमप पाप्मानं हते य एवं वेद ते वै पुरस्तादपहता असुराः पश्चात्परीत्य प्राविशंस्ते देवाः प्रतिबुध्य विश्वान्देवानात्मानं पश्चात्तृतीयसवने पर्यौहंस्ते विश्वैरेव देवैरात्मभिः पश्चात्तृतीयसवनेऽसुररक्षांस्यपाघ्नत तथैवैतद्यजमाना विश्वैरेव देवैरात्मभिः पश्चात्तृतीयसवनेऽसुररक्षांस्यपघ्नते तस्माद्वैश्वदेवं तृतीयसवनमप पाप्मानं हते य एवं वेद ते वै देवा असुरानेवमपाघ्नत सर्वस्मादेव यज्ञात्ततो वै देवा अभवन्परासुरा भवत्यात्मना परास्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद ते देवा एवं क्लृप्तेन यज्ञेनापासुरान्पाप्मानमघ्नताजयन्स्वर्गं लोकमप ह वै द्विषन्तम्पाप्मानम्भ्रातृव्यं हते जयति स्वर्गं लोकं य एवं वेद यश्चैवं विद्वान्सवनानि कल्पयति ४

स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति प्रातःसवनेऽहरेव तदह्नोऽनुरूपं कुर्वन्त्यवरेणैव तदह्ना परमहरभ्यारभन्तेऽथ तथा न मध्यंदिने श्रीर्वै पृष्ठानि तानि तस्मै न तस्थानानि यत्स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्युस्तयैव विभक्त्या तृतीयसवने न स्तोत्रियं स्तोत्रियस्यानुरूपां कुर्वन्ति ५

अथात आरम्भणीया एव ऋजुनीती नो वरुण इति मैत्रावरुणस्य मित्रो नयतु विद्वानिति प्रणेता वा एष होत्रकाणां यन्मैत्रावरुणस्तस्मादेषा प्रणेतृमती भवतीन्द्रं वो विश्वतस्परीति ब्राह्मणाच्छंसिनो हवामहे जनेभ्य इतीन्द्रमेवैतयाहरहार्निह्वयन्ते न हैषां विहवेऽन्य इन्द्रं वृङ्क्ते यत्रैवं विद्वान्ब्राह्मणा-

च्छंस्येतामहरहः शंसति यत्सोम ऋा सुते नर इत्यछावाकस्येन्द्राग्नी ऋजो-हवुरितीन्द्राग्नी एवैतयाहरहर्निह्वयन्ते न हैषां विहवेऽन्य इन्द्राग्नी वृङ्क्ते यत्रैवं विद्वानछावाक एतामहरहः शंसति ता वा एताः स्वर्गस्य लोकस्य नावः सम्पारिरायः स्वर्गमेवैताभिर्लोकमभिसंतरन्ति ६

ऋथातः परिधानीया एव ते स्याम देव वरुरोति मैत्रावरुरास्येषं स्वश्च धीमहीत्ययं वै लोक इषमित्यसौ लोकः स्वरित्युभावेवैतया लोकावारभन्ते व्यन्तरिद्मतिरदिति ब्राह्मनाच्छंसिनो विवत्तृचं स्वर्गमेवैभ्य एताय लोकं विवृणोति मदे सोमस्य रोचना इन्द्रो यदभिनद्वलमिति सिषासवो वा एते यद्दीद्मितास्तस्मादेषा वलवती भवत्युद्गा ऋाजदङ्गिरोभ्य ऋाविसः् कृरावन्गुहा सतीः ऋर्वाञ्चं नुनुदे वलमिति सनिमेवैभ्य एतयावरुन्द्ध इन्द्रेण रोचना दिव इति स्वर्गो वै लोक इन्द्रेण रोचना दिवो दृळ्हानि दृंहितानि च स्थिराणि न पराणुद इति स्वर्ग एवैतया लोकेऽहरहः प्रतितिष्ठन्तो यन्त्याहं सरस्वती-वतोरित्यछावाकस्य वाग्वै सरस्वती वाग्वतोरिति हैतदाहेन्द्राग्नयोरवो वृण इत्येतद्ध वा इन्द्राग्नयोः प्रियं धाम यद्वागिति प्रियेणैवैनौ तद्धाम्ना समर्धयति प्रियेण धाम्ना समृध्यते य एवं वेद ७

उभय्यः परिधानीया भवन्ति होत्रकारणाम्प्रातःसवने च माध्यंदिने चाही-नाश्चैकाहिकाश्च तत ऐकाहिकाभिरेव मैत्रावरुणो परिदधाति तेनास्माल्लोकान्न प्रच्यवतेऽहीनाभिरछावाकः स्वर्गस्य लोकस्याप्त्या उभयीभिर्ब्राह्मणाच्छंसी तेनो स उभौ व्यन्वारभमाण एतीमं चामुं च लोकमथो मैत्रावरुणं चाछावाकं चाथो ऋहीनं चैकाहम्चाथो संवत्सरं चाग्निष्टोमं चैवमु स उभौ व्यन्वारभमाण एत्यथ तत ऐकाहिका एव तृतीयसवने होत्रकाणाम्परिधानीया भवन्ति प्रतिष्ठा वा एकाहः प्रतिष्ठायामेव तद्यज्ञमन्ततः प्रतिष्ठापयन्त्यनवानम्प्रातःसवने यजे-देकां द्वे न स्तोममतिशंसेत्तद्यथाभिहेषते पिपासते द्मिप्रम्प्रयछेत्तादृक्तदथो द्मिप्रं देवेभ्योऽन्नाद्यं सोमपीथम्प्रयछानीति द्मिप्रं हास्मिँल्लोके प्रतितिष्ठत्य-परिमिताभिरुत्तरयोः सवनयोरपरिमितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याप्त्यै कामं तद्धोता शांसेद्यद्धोत्रकाः पुर्वेद्युः शंसेयुर्यद्वा होता तद्धोत्रकाः प्राणो वै होताङ्गानि होत्रकाः समानो वा ऋयम्प्राणोऽङ्गान्यनुसंचरति तस्मात्तत्कामं होता शंसेद्यद्धोत्रकाः पूर्वेद्युः शंसेयुर्यद्वा होता तद्धोत्रकाः सूक्तान्तैर्होता परिदधदेत्यथ

समान्य एव तृतीयसवने होत्रकाणाम्परिधानीया भवन्त्यात्मा वै होताङ्गानि होत्रकाः समाना वा इमेऽङ्गानामन्तास्तस्मात्समान्य एव तृतीयसवने होत्रकाणाम्परिधानिया भवन्ति भवन्ति ८ २

## अध्याय २८ खगडः १-८

आ त्वा वहन्तु हरय इति प्रातःसवन उन्नीयमानेभ्योऽन्वाह वृषणवतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धा ऐन्द्रीरन्वाहैन्द्रो वै यज्ञो गायत्रीरन्वाह गायत्रं वै प्रातःसवनं नव न्यूनाः प्रातःसवनेऽन्वाह न्यूने वै रेतः सिच्यते दश मध्यंदिनेऽन्वाह न्यूने वै रेतः सिक्तम्मध्यं स्त्रियै प्राप्य स्थविष्ठम्भवति नव न्यूनास्तृतीयसवनेऽन्वाह न्यूनाद्वै प्रजाः प्रजायन्ते तद्यदेतानि केवलसूक्ता-न्यन्वाह यजमानमेव तद्गर्भम्भूतम्प्रजनयति यज्ञाद्देवयोन्यै ते हैके सप्तसप्ता-न्वाहुः सप्त प्रातःसवने सप्त माध्यंदिने सप्त तृतीयसवने यावत्यो वै पुरोनुवाक्यास्तावत्यो याज्याः सप्त वै प्राञ्चो यजन्ति सप्त वषट्कुर्वन्ति तासा-मेताः पुरोन्वाक्या इति वदन्तस्तत्तथा न कुर्याद्यजमानस्य ह ते रेतो विलु-म्पन्त्यथो यजमानमेव यजमानो हि सूक्तं नवभिर्वा एतम्मैत्रावरुणोऽस्मा-ल्लोकादन्तरिक्षलोकमभि प्रवहति दशभिरन्तरिक्षलोकादमुं लोकमभ्यन्तरि-क्षलोको हि ज्येष्ठोऽनवभिरमुष्माल्लोकात्स्वर्गं लोकमभि न ह वै ते यजमानां स्वर्गं लोकमभि वोळ्हुमर्हन्ति ये सप्तसप्तान्वाहुस्तस्मात्केवलश एव सूक्तान्यनुब्रूयात् ९

अथाह यदैन्द्रो वै यज्ञोऽथ कस्माद्द्वादेव प्रातःसवने प्रस्थितानाम्प्रत्य-क्षादैन्द्रीभ्यां यजतो होता चैव ब्राह्मणाच्छऽइ चेदं ते सोम्यम्मध्विति होता यजतीन्द्र त्वा वृषभं वयं इति ब्राह्मणाच्छंसी नानादे अत्याभिरितरे कथं तेषामैन्द्र्यो भवन्तीति मित्रं वयं हवामह इति मैत्रावरुणो यजति वरुणं सोमपीतय इति यद्वै किंच पीतवत्पदं तदैन्द्रं रूपं तेनेन्द्रम्प्रीणाति मरुतो यस्य हि क्षय इति पोता यजति स सुगोपातमो जन इतीन्द्रो वै गोपास्तदैन्द्रं रूपंतेनेन्द्रम्प्रीणात्यग्ने पत्नीरिहा वहेति नेष्टा यजति त्वष्टारं सोमपीतय इतीन्द्रो वै त्वष्टा तदैन्द्रं रूपं तेनेन्द्रम्प्रीणात्युक्षान्नाय वशान्नायेत्याग्नीध्रो याजति सोमपृष्ठाय वेधस इतीन्द्रो वै वेधस्तदैन्द्रं रूपं तेनेन्द्रम्प्रीणति प्रातर्यावभिरा गतं देवेभिर्जेन्यावसू इन्द्राग्नी सोमपीतय इति स्वयंसमृद्धाछावाकास्यैवमु हैता

ऐन्द्र्यो भवन्ति यन्नानादेवत्यास्तेनान्या देवताः प्रीणाति यदु गायत्र्यस्तेनाग्नेय्य एतदु हैताभिस्त्रयमुपाप्नोति १०

असावि देवं गोऋजीकमन्ध इति मध्यंदिन उन्नीयमानेभ्योऽन्वाह वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धा ऐन्द्रीरन्वाहैन्द्रो वै यज्ञस्त्रिष्टुभोऽन्वाह त्रैष्टुभम्वै माध्यंदिनं सवनं तदाहुर्यत्तृतीयसवनस्यैव रूपम्मद्वदथ कस्मान्मध्यंदिने मद्वतीरनु चाह यजन्ति चाभिरिति माद्यन्तीव वै मध्यंदिने देवताः समेव तृतीयसवने मादयन्ते तस्मान्मध्यंदिने मद्वतीरनु चाह यजन्ति चाभिस्ते वै खलु सर्व एव माध्यंदिने प्रस्थितानाम्प्रत्यक्षादैन्द्रीभिर्यजन्त्यभितृण्णवतीभिरेके पिबा सोममभि यमुग्र तर्द इति होता यजति स ईम्पाहि य ऋजीषी तरुत्र इति मैत्रावरुणो यजत्येवा पाहि प्रत्नथा मन्दतु त्वेति ब्राह्मणाच्छंसी यजत्यर्वाङेहि सोमकामं त्वाहुरिति पोता यजति तवायं सोमस्त्वमेह्यर्वाङिति नेष्टा यजतीन्द्रय सोमाः प्रदिवो विदाना इत्यछावाको यजत्यापूर्णो अस्य कलशः स्वाहेत्याग्नीध्रो यजति तासामेता अभितृण्णवत्यो भवन्तीन्द्रो वै प्रातःसवने न व्यजयत स एताभिरेव माध्यंदिनं सवनमभ्यतृणद्यदभ्यतृणत्तस्मादेता अभितृण्णवत्यो भवन्ति ११

इहोप यात शवसो नपात इति तृतीयसवन उन्नीयमानेभ्योऽन्वाह वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धास्ता ऐन्द्रार्भव्यो भवन्ति तदाहुर्यन्नार्भवीषु स्तुवतेऽथ कस्मादार्भवः पवमान इत्याचक्षत इति प्रजापतिर्वै पित ऋभून्मर्त्यान्सतोऽमर्त्यान्कृत्वा तृतीयसवन आभजत्तस्मान्नार्भवीषु स्तुवतेऽथार्भवः पवमान इत्याचक्षतेऽथाह यद्यथाछन्दसम्पूर्वयोः सवनयोरन्वाह गायत्रीः प्रातःसवने त्रिष्टुभो माध्यंदिनेऽथ कस्माज्जागते सति तृतीयसवने त्रिष्टुभोऽन्वाहेति धीतरसं वै तृतीयसवनमथैतदधीतरसं शुक्रियं छन्दो यत्त्रिष्टुप्सवनस्य सरसताया इति ब्रूयादथो इन्द्रं एवैतत्सवनेऽन्वाभजतीत्यथाह यदैन्द्रार्भवं वै तृतीयसवनमथ कस्मादेष एव तृतीयसवने प्रस्थितानाम्प्रत्यक्षादैन्द्रार्भव्या यजतीन्द्र ऋभुभिर्वाजवद्भिः समुक्षितमिति होतैव नानादेवत्याभिरितरे कथं तेषामैन्द्रार्भव्यो भवन्तीतीन्द्रावरुणा सुतपाविमं सुतमिति मैत्रावरुणो यजति युवो रथो अध्वरं देववीतय इति बहूनि वह तदृभूणामूपमिन्द्रश्च सोमम्पिबतम्बृहस्पत इति ब्राह्मणाच्छंसी यजत्या वां

विशन्त्विन्दवः स्वाभुव इति बहूनि वाह तदृभूणां रूपमा वो वहन्तु सप्तयो रघुष्यद इति पोता यजति रघुपत्वानः प्र जिगात बाहुभिरिति बहूनि वह तदृभूणां रूपममेव नः सुहवा आ हि गन्तनेति नेष्टा यजति गन्तनेति बहूनि वाह तदृभूणां रूपमिन्द्राविष्णू पिबतम्मध्वो अस्येत्यछावाको यजत्या वामन्धांसि मदिराण्यग्मन्निति बहूनि वाह तदृभूणां रूपमिमं स्तोममर्हते जातवेदस इत्याग्नीध्रो यजति रथमिव सम्महेमा मनीषयेति बहूनि वाह तदृभूणां रूपमेवमु हैता ऐन्द्रार्भव्यो भवन्ति यन्नानादेवत्यास्तेनान्या देवताः प्रीणाति यदु जगत्प्रासाहा जागतं वै तृतीयसवनं तृतीयसवनस्यैव समृद्ध्यै १२

अथाह यदुक्थिन्योऽन्या होत्रा अनुक्था अन्याः कथमस्यैता उक्थिन्यः सर्वाः समाः समृद्धा भवन्तीति यदेवैनाः सम्प्रगीर्य होत्रा इत्याचक्षते तेन समा यदुक्थिन्योऽन्या होत्रा अनुक्था अन्यास्तेनो विषमा एवमु हास्यैता उक्थिन्यः सर्वाः समाः समृद्धा भवन्त्यथाह शंसन्ति प्रातःसवने शंसन्ति माध्यंदिने होत्रकाः कथमेषां तृतीयसवने शस्तम्भवतीति यदेव माध्यंदिने द्वेद्वे सूक्ते शंसन्तीति ब्रूयात्तेनेत्यथाह यद्द्व्युक्थो होता कथं होत्रका द्व्युक्था भवन्तीति यदेव द्विदेवत्यभिर्यजन्तीति ब्रूयात्तेनेति १३

अथाह यदेतास्तिस्र उक्थिन्यो होत्राः कथमितरा उक्थिन्यो भवन्तीत्याज्यमेवाग्नीध्रीयाया उक्थम्मरुत्वतीयम्पोत्रीयायै वैश्वदेवं नेष्ट्रीयायै ता वा एता होत्रा एवंन्यङ्गा एव भवन्त्यथाह यदेकप्रैषा अन्ये होत्रका अथ कस्माद्द्विप्रैषः पोता द्विप्रैषो नेष्टेति यत्रादो गायत्री सुपर्णो भूत्वा सोममाहरत्तदेतासां होत्राणामिन्द्र उक्थानि परिलुप्य होत्रे प्रददौ यूयम्माभ्यह्वयध्वं यूयमस्यावेदिष्टेति ते होचुर्देवा वाचेमे होत्रे प्रभावयामेति तस्मात्ते द्विप्रैषे भवत ऋचाग्नीध्रीयाम्प्रभावयां चक्रुस्तस्मात्तस्यैकयर्चा भूयस्यो याज्या भवन्त्यथाह यद्धोता यक्षद्धोता यक्षदिति मैत्रावरुनो होत्रे प्रेष्यत्यथ कस्मादहोतृभ्यः सद्भ्यो होत्रशंसिभ्यो होता यक्षद्धोता यक्षदिति प्रेष्यतीति प्राणो वै होता प्राणः सर्व ऋत्विजः प्राणो यक्षत्प्रानो यक्षदित्येव तदाहाथाहास्त्युद्गातृणाम्प्रैषाः नाँ इति अस्तीटि ब्रूयाद्यदेवैतत्प्रशास्ता जपं जपित्वा स्तुध्वमित्याह स एषाम्प्रैषोऽथाहास्त्यछावाकस्य प्रवराः नाँ इति अस्तीति ब्रूयाद्यदेवैनमध्वर्युराहाछावाक वदस्व यत्ते वाद्यमित्येषोऽस्य प्रवरोऽथाह यदैन्द्रावरुणम्मैत्रावरुणस्तृतीयसवने शंसत्यथ

कस्मादस्याग्नेयौ स्तोत्रियानुरूपन्भवत इत्यग्निना वै मुखेन देवा असुरानुक्थेभ्यो निर्जघ्नुस्तस्मादस्याग्नेयौ स्तोत्रियानुरूपन्भवतोऽथाह यदैन्द्राबार्हस्पत्यम्ब्राह्मणाच्छांसी तृतीयसवने शंसत्यैन्द्रावैष्णवमछावाकः कथमेनयोरैन्द्राः स्तोत्रियानुरूपा भवन्तीतीन्द्रो ह स्म वा असुरानुक्थेभ्यः प्रजिगाय सोऽब्रवीत्कश्चाहं चेत्यहं चाहं चेति ह स्म देवता अन्ववयन्ति स यदिन्द्रः पूर्वः प्रजिगाय तस्मादेनयोरैन्द्राः स्तोत्रियानुरूपा भवन्ति यद्वहं चाहं चेति ह स्म देवता अन्ववयुस्तस्मान्नानादेवत्यानि शंसतः १४

अथाह यद्वैश्वदेवं वै तृतीयसवनमथ कस्मादेतान्यैन्द्राणि जागतानि सूक्तनि तृतीयसवन आरम्भणीयानि शस्यन्त इतीन्द्रमेवैतैरारभ्य यन्तीति ब्रूयादथो यज्जागतं वै तृतीयसवनं तज्जगत्काम्यैव तद्यत्किंचात ऊर्ध्वं छन्दः शस्यते तद्ध सर्वं जागतम्भवत्येतानि चेदैन्द्राणि जागतानि सूक्तानि तृतीयसवन आरम्भणीयानि शस्यन्तेऽथ त्रैष्टुभमछावाकोऽन्ततः संसति सं वां कर्मणेति यदेव पनाय्यं कर्म तदेतदभिवदति समिषेत्यन्नं वा इषोऽन्नाद्यस्यावरुद्ध्या अरिष्टैर्नः पथिभिः पारयन्तेति स्वस्तिताया एवैतदहरहः शंसत्यथाह यज्जागतं वै तृतीयसवनमथ कस्मादेषां त्रिष्टुभः परिधानीया भवन्तीति वीर्यं वै त्रिष्टुब्वीर्य एव तदन्ततः प्रतितिष्ठन्तो यन्तीयमिन्द्रं वरुणमष्ट मे गीरिति मैत्रवरुणस्य बृहस्पतिर्नः परि पातु पश्चादिति ब्राह्मणाच्छांसिन उभा जिग्यथुरित्यछावाकस्यो भौ हि तौ जिग्यतुर्न परा जयेथे न परा जिग्य इति न हि तयोः कतरश्चन पराजिग्य इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामितीन्द्रश्च ह वै विष्णुश्चासुरैर्युयुधाते तान्ह स्म जित्वोचतुः कल्पामहा इति ते ह तथेत्यसुरा उचुः सोऽब्रवीदिन्द्रो यावदेवायं विष्णुस्त्रिर्विक्रमते तावदस्माकमथ युष्माकमितरदिति स इमाँल्लोकान्विचक्रमेऽथो वेदानथो वाचं तदाहुः किं तत्सहस्रमितीमे लोका इमे वेदा अथो वागिति ब्रूयादैरयेथाम्-ऐरयेथामित्यछावाक उक्थ्येऽभ्यस्यति स हि तत्रान्त्यो भवत्यग्निष्टोमे होतातिरात्रे च स हि तत्रान्त्यो भवत्यभ्यस्येत्षोळशिनीम् नाभ्यस्येदिति अभ्यस्येदित्याहुः कथमन्येष्वहस्स्वभ्यस्यति कथमत्र नाभ्यस्येदिति तस्मादभ्यस्येत् १५

अथाह यन्नाराशंसं वै तृटीयसवनमथ कस्मादछावाकोऽन्ततः शिल्पेष्वनाराशंसीः शंसतीति विकृतिर्वै नाराशंसं किमिव च वै किमिव च रेतो विक्रियते

तत्तद विकृतम्प्रजातम्भवत्यथैतन्मृद्विव छन्दः शिथिरन्यन्नाराशंसमथैषोऽन्त्यो यदछावाकस्तद्दृळ्हतायै दृळ्हे प्रतिष्ठास्याम इति तस्मादछावाकोऽन्ततः शिल्पेष्वनाराशंसिः शंसति दृळ्हतायै दृळ्हे प्रतिष्ठास्याम दृळ्हे प्रतिष्ठास्याम इति १६ ३

अध्याय २९ खराडः १-१०

यः श्वःस्तोत्रियस्तमनुरूपं कुर्वन्ति प्रातःसवनेऽहीनसंतत्यै यथा वा एकाहः सुत एवमहीनस्तद्यथैकाहस्य सुतस्य सवनानि संतिष्ठमानानि यन्त्येवमेवाहीनस्याहानि संतिष्ठमानानि यन्ति तद्यच्छ्वःस्तोत्रियमनुरूपं कुर्वन्ति प्रातःसवनेऽहीनसंतत्या अहीनमेव तत्संतन्वन्ति ते वै देवाश्च ऋषयश्चाद्रियन्त समानेन यज्ञं संतनवामेति त एतत्समानं यज्ञस्यापश्यौ समानान्प्रगाथान्समानीः प्रतिपदः समानानि सूक्तान्योकःसारी वा इन्द्रो यत्र वा इन्द्रः पूर्वं गछत्यैव तत्रापरं गछति यज्ञस्यैव सेन्द्रतायै १७

तान्वा एतान्सम्पातान्विश्वामित्रः प्रथममपश्यत्तान्विश्वामित्रेण दृष्टान्वामदेवोऽसृजतै वा त्वामिन्द्र वज्रिन्नत्र यन्न इन्द्रो जुजुषे यच्च वष्टि कथा महामवृधत्कस्य होतुरिति तान्क्षिप्रं समपतद्यत्क्षिप्रं समपतत्तत्सम्पातानां सम्पातत्वं स हेन्नां चक्रे विश्वामित्रो यान्वा अहं सम्पातानपश्यं तान्वामदेवोऽसृष्ट कानि न्वहं सूक्तानि सम्पातांस्तत्प्रतिमान्सृजेयेति स एतानि सूक्तानि सम्पातांस्तत्प्रतिमानसृजत सद्यो ह जातो वृषभः कनीन इन्द्रः पूर्भिदातिरद्दासमर्कैरिमामू षु प्रभृतिं सातये धा इछन्ति त्वा सोम्यासः सखायः शासद्वह्निर्दुहितुर्नप्त्यं गादभि तष्टेव दीधया मनीषामिति य एक इद्धव्यश्चर्षणीनामिति भरद्वाजो यस्तिग्मशृङ्गो वृषभो न भीम उदु ब्रह्माणयैरत श्रवस्येति वसिष्ठोऽस्मा इदु प्र तवसे तुरायेति नोधास्त एते प्रातःसवने षळहस्तोत्रियाञ्छस्त्वा माध्यंदिनेऽहीनसूक्तानि शंसन्ति तान्येतान्यहीनसूक्तान्या सत्यो यातु मघवाँ ऋइजीषीति सत्यवन्मैत्रावरुनो ऽस्मा इदु प्र तवसे तुरायेन्द्राय ब्रह्माणि राततमा इन्द्र ब्रह्माणि गोतमासो अक्रन्निति ब्रह्मणवद्ब्राह्मणाच्छंसी शासद्वह्निर्जनयन्त वह्निमिति वह्निवदछावाकस्तदाहुः कस्मादछावाको वह्निवदेतत्सूक्तमुभयत्र शंसति पराञ्चिषु चैवाहस्स्वभ्यावर्तिषु चेति वीर्यवान्वा एष बह्वृचो वह्निवदेतत्सुक्तं वहति ह वै वह्निर्धुरो यासु युज्यते तस्मादछावाको वह्निवदेतत्सूक्तमुभयत्र

शंसति पराञ्चिषु चैवाहस्स्वभ्यावर्तिषु च तानि पञ्चस्वहस्सु भवन्ति चतुर्विंशेऽभिजिति विषुवति विश्वजिति महाव्रतेऽहीनानि ह वा एतान्यहानि न ह्येषु किं चन हीयते पराञ्चीनि ह वा एतान्यहान्यनभ्यावर्तीनि तस्मादेनान्येतेष्वहस्सु शंसन्ति यदेनानि शंसन्त्यहीनान्स्वर्गाँल्लोकान्सर्वरूपान्सर्वसमृद्धानवाप्नवामेति यदेवैनानि शंसन्तीन्द्रमेवैतैर्निर्ह्वयन्ते यथ ऋषभं वाशितायै यद्वेवैनानि शंसन्त्यहीनस्य संतत्या अहीनमेव तत्संतन्वन्ति १८

ततो वा एतांस्त्रीन्सम्पातान्मैत्रावरुणो विपर्यासमेकैकमहरहः शंसत्येवा त्वामिन्द्र वज्रिन्नत्रेति प्रथमेऽहनि यन्न इन्द्रो जुजुषे यच्च वष्टीति द्वितीये कथा महामवृधत्कस्य होतुरिति तृतीये त्रीनेव सम्पातान्ब्राह्मणाच्छंसी विपर्यासमेकैकमहरहः शंसतीन्द्रः पूर्भिदातिरद्दासमर्कैरिति प्रथमेऽहनि य एक इद्धव्यश्चर्षणीनामिति द्वितीये यस्तिग्मशृङ्गो वृषभो न भीम इति तृतीये त्रीनेव सम्पातानछावाको विपर्यासमेकैकमहरहः शंसतीमामू षु प्रभृतिं सातये धा इति प्रथमेऽहनीछन्ति त्वा सोम्यासः सखाय इति द्वितीये शासद्वह्निर्दुहितुर्नप्त्यं गादिति तृतीये तानि वा एतानि नव त्रीणि चाहरहःशस्यानि तानि द्वादश सम्पद्यन्ते द्वादश वै मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तत्संवत्सरम्प्रजापतिं यज्ञमाप्नुवन्ति तत्संवत्सरे प्रजापतौ यज्ञेऽहरहः प्रतितिष्ठन्तो यन्ति तान्यन्तरेणावापमावपेरन्नन्यूङ्ख्या विराजो वैमदीश्चतुर्थेऽहनि पङ्क्तीः पञ्चमे पारुच्छेपीः षष्ठेऽथ यान्यहानि महास्तोमानि स्युः को अद्य नर्यो देवकाम इति मैत्रावरुण आवपेत वने न वा यो न्यधायि चाकन्निति ब्राह्मणाच्छंस्या याह्यर्वाङुप वन्धुरेष्ठा इत्यछावाक एतानि वा आवपनान्येतैर्वा आवपनैर्देवाः स्वर्गम्लोकमजयन्नेतैर्ऋषयस्तथैवैतद्यजमाना एतैरावपनैः स्वर्गं लोकं जयन्ति १९

सद्यो ह जातो वृषभः कनीन इति मैत्रावरुनः पुरस्तात्सूक्तानामहरहः शंसति तदेतत्सूक्तां स्वर्ग्यमेतेन वै सूक्तेन देवाः स्वर्गं लोकमजयन्नेतेन ऋषयस्तथैवैतद्यजमाना एतेन सूक्तेन स्वर्गं लोकं जयन्ति तदु वैश्वामित्रं विश्वस्य ह वै मित्रं विश्वामित्र आस विश्वं हास्मै मित्रम्भवति य एवं वेद येषां चैवं विद्वानेतन्मैत्रावरुणः पुरस्तात्सूक्तानामहरहः शंसति तदृषभवत्पशुमद्भवति पशूनामवरुद्ध्यै तत्पञ्चर्चम्भवति पञ्चपदा पङ्क्तिः पङ्क्तिर्वा अन्नमन्नाद्यस्यावरुद्ध्या

उदु ब्रह्माण्यैरत श्रवस्येति ब्राह्मणाच्छंसी ब्रह्मण्वत्समृद्धं सूक्तमहरहः शंसति तदेतत्सूक्तं स्वर्ग्यमेतेन वै सूक्तेन देवाः स्वर्गं लोकमजयन्नेतेन ऋषयस्तथैवैतद्यजमाना एतेन सूक्तेन स्वर्गं लोकं जयन्ति तदु वासिष्ठमेतेन वै वसिष्ठ इन्द्रस्य प्रियं धामोपागछत्स परमं लोकमजयदुपेन्द्रस्य प्रियं लोकं गछति जयति परमं लोकं य एवं वेद तद्वै षळृचं षड्वा ऋतव ऋतूनामाप्त्यै तदुपरिष्टात्सम्पातानां शंसत्याप्त्वैव तत्स्वर्गं लोकं यजमाना अस्मिँल्लोके प्रतितिष्ठन्त्यभि तष्टेव दीधया मनीषामित्यछावाकोऽहरहः शंसत्यभिवत्तत्यै रूपमभि प्रियाणि मर्मृशत्पराणीति यान्येव पराण्यहानि तानि प्रियाणि तान्येव तदभिमर्मृशतो यन्त्यभ्यारभमाणाः परो वा अस्माल्लोकात्स्वर्गो लोकस्तमेव तदभिवदति कवीँरिछामि संदृशे सुमेधा इति ये वै ते न ऋषयः पूर्वे प्रेतास्ते वै कवयस्तानेव तदभ्यतिवदति तदु वैश्वमित्रं विश्वस्य ह वै मित्रं विश्वामित्र आस विश्वं हास्मै मित्रम्भवति य एवं वेद तदनिरुक्तम्प्राजापात्यं शंसत्यनिरुक्तो वै प्रजापतिः प्रजापतेराप्त्यै सकृदिन्द्रं निराह तेनैन्द्राद्रूपान्न प्रच्यवते तद्वै दशर्चं दशाक्षरा विराळ् अन्नं विराळ् अन्नाद्यस्यावरुद्ध्यै यदेव दशर्चा दश वै प्राणाः प्राणानेव तदाप्नुवन्ति प्राणानात्मन्दधते तदुपरिष्टात्सम्पातानां शंसत्याप्त्वैव तत्स्वर्गं लोकं यजमाना अस्मिँल्लोके प्रतितिष्ठन्ति २०

कस्तमिन्द्र त्वावसुं कन्नव्यो अतसीनां कदू न्वस्याकृतमिति कद्वन्तः प्रगाथा आरम्भणीया अहरहः शस्यन्ते को वै प्रजापतिः प्रजापतेराप्त्यै यदेव कद्वन्ता अन्नं वै कमन्नाद्यस्यावरुद्ध्यै यद्वेव कद्वन्ता अहरहर्वा एते शान्तान्यहीनसूक्तान्युपयुञ्जाना यन्ति तानि कद्वद्भिः प्रगाथैः शमयन्ति तान्येभ्यः शान्तानि कम्भवन्ति तान्येनाञ्छान्तानि स्वर्गं लोकमभि वहन्ति त्रिष्टुभः सूक्तप्रतिपदः शंसेयुस्ता हैके पुरस्तात्प्रगाथानां शंसन्ति धाय्या इति वदन्तस्तत्तथा न कुर्यात्क्षत्रं वै होता विशो होत्राशंसिनः क्षत्रायैव तद्विशम्प्रत्युद्यामिनीं कुर्युः पापवस्यसं त्रिष्टुभो म इमाः सूक्तप्रतिपद इत्येव विद्यात्तद्यथा समुद्रम्प्रप्लवेरन्नेवं हैव ते प्रप्लवन्ते वे संवत्सरं वा द्वादशाहं वासते तद्यथा सैरावतीं नावम्पारकामाः समारोहेयोरेवमेवैतास्त्रिष्टुभः समारोहन्ति न ह वा एतच्छन्दो गमयित्व स्वर्गं लोकमुपावर्तते वीर्यवत्तमं हि ताभ्यो न व्याह्वयीत समानं हि छन्दोऽथो नेद्धाय्याः करवाणीति यदेनाः शंसन्ति प्रज्ञाताभिः सूक्तप्रतिपद्भिः सूक्तानि समारोहामेति यदेवैनाः शंसन्तीन्द्रमेवैताभिर्निह्वयन्ते यथ ऋषभं

वाशितायै यद्वैवैनाः शंसन्त्यहीनस्य संतत्या अहीनमेव तत्संतन्वन्ति २१

अप प्राच इन्द्र विश्वाँ अमित्रानिति मैत्रावरुणः पुरस्तात्सूक्तानामहरहः शंसत्यपापाचो अभिभूते नुदस्व अपोदीचो अप शूराधराच उरौ यथा तव शर्मन्मदेमेत्यभयस्य रूपमभयमिव हि यन्निछति ब्रह्मणा ते ब्रह्मयुजा युनज्मीति ब्राह्मणाच्छंस्यहरहः शंसति युनज्मीति युक्तवती युक्त इव ह्यहीनोऽहीनस्य रूपमुरुं नो लोकमनु नेषि विद्वानित्यछावाकोऽहरहः शंसत्यनु नेषित्येतीव ह्यहीनोऽहीनस्य रूपं नेषीति सत्रायणरूपं ता वा एता अहरहः शस्यन्ते समानीभिः परिदध्युरोकःसारी हैषामिन्द्रो यज्ञम्भवतीं यथ ऋषभो वाशितां यथा वा गौः प्रज्ञातं गोष्ठमेवं हैषामिन्द्रो यज्ञमैव गछति न शुनंहुवीययाहीनस्य परिदध्यात्क्षत्रियो ह राष्ट्राच्च्यवते यो हैव परो भवति तमभिह्वयति २२

अथातोऽहीनस्य युक्तिश्च विमुक्तिश्च व्यन्तरिक्षमतिरदित्यहीनं युङ्क्त एवेदि-न्द्रमिति विमुञ्चत्याहं सरस्वतीवतोर्नूनं सा त इत्यहीनं युङ्क्ते ते स्याम देव वरुण नू ष्टुत इति विमुञ्चत्येष ह वा अहीनं तन्तुमर्हति य एनं योक्तुं च विमोक्तुं च वेद तद्यच्चतुर्विंसेऽहन्युज्यन्ते सा युक्तिरथ यत्पुरस्तादुदयनीयस्यातिरात्रस्य विमुच्यन्ते स विमुक्तिस्तद्यच्चतुर्विंसेऽहन्नैकाहिकाभिः परिदध्युरत्राहैव यज्ञं संस्थापयेयुर्नाहीनकर्म कुर्युरथ यदहीनपरिधानीयाभिः परिदध्युर्यथा श्रान्तो-ऽविमुच्यमान उत्कृत्येतैवं यजमाना उत्कृत्येरन्नुभयीभिः परिदध्युस्तद्यथा दी-र्घाध्व उपविमोकं यायात्तादृक्तत्संततो हैषां यज्ञो भवतीँ व्यू मुञ्चन्त एकां द्वे न द्वयोः सवनयोः स्तोममतिशंसेद्दीर्घारण्यानि ह वै भवन्ति यत्र बह्वीभिः स्तोमो-ऽतिशस्यतेऽपरिमिताभिः तृतीयसवनेऽपरिमितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याप्त्यै संततो हास्याभ्यारब्धोऽविस्रस्तोऽहीनो भवति य एवं विद्वानहीनं तनुते २३

देवा वै वले गाः पर्यपश्यंस्ता यज्ञेनैवेप्संस्ताः षष्ठेनाह्नाप्नुवंस्ते प्रातःसवने नभाकेन वलमनभयंस्तं यदनभयाँ अश्रथयन्नेवैनं तत्त उ तृतीयसवने वज्रेण वालखिल्याभिर्वाचः कूटेनैकपदया वलं विरुज्य गा उदाजंस्तथैवैतद्यजमानाः प्रातःसवने नभाकेन वलं नभयन्ति तं यन्नभयन्तीँ श्रथयन्त्येवैनं तत्तस्माद्धोत्रकाः प्रातःसवने नाभाकांस्तृचाञ्छंसन्ति यः ककुभो निधारय इति मैत्रावरुणः पूर्वीष्ट

इन्द्रोपमातय इति ब्राह्मणाच्छंसी ता हि मध्यम्भराणामित्यछावाकस्त उ तृटीयसवने वज्रेण वालखिल्याभिर्वाचः कूटेनैकपदया वलं विरुज्य गा आप्नुवन्ति पच्छः प्रथमं षड्वालखिल्यानां सूक्तानि विहरत्यर्धर्चशो द्वितीय-मृक्शस्तृतीयं स पच्छो विहरन्प्रगाथे-प्रगाथ एवैकपदां दध्यात्स वाचः कूटस्ता एताः पञ्चैकपदाश्चतस्रो दशमादह्न एका महाव्रतादथाष्टाक्षराणि माहानामनानि पदानि तेषां यावद्भिः सम्पद्येत तावन्ति शन्सेन्नेतराण्याद्रियेताथार्धर्चशो विह-रंस्ताश्चैवैकपदाः शंसेत्तानि चैवाष्टाक्षराणि माहानामनानि पदान्यथ ऋक्शो विहरंस्ताश्चैवैकपदाः शंसेत्तानि चैवाष्टाक्षराणि माहानामनानि पदानि स यत्प्रथमं षड्वालखिल्यानां सूक्तानि विहरति प्राणं च तद्वाचं च विहरति यद्द्वितीयं चक्षुश्च तन्मनश्च विहरति यत्तृतीयं श्रोत्रं च तदात्मानं च विहरति तदुपाप्तो विहारे काम उपाप्तो वज्रे वालखिल्यासूपाप्तो वाचः कूट एकपदायामुपाप्तः प्राणक्लृप्त्यामविहृतानेव चतुर्थम्प्रगाथाञ्छंसति पशवो वै प्रगाथाः पशूनामवरुद्ध्यै नात्रैकपदां व्यवदध्याद्यदत्रैकपदां व्यवदध्याद्वाचः कूटेन यजमानात्पशून्निर्हण्याद्य एनं तत्र ब्रूयाद्वाचः कूटेन यजमानात्प-शून्निरवधीरपशुमेनमकरिति शश्वत्तथा स्यात्तस्मात्तत्रैकपदां न व्यवदध्या-द्व्येवोत्तमे सूक्ते पर्यस्यति स एव तयोर्विहारस्तदेतत्सौबलाय सर्पिर्वात्सिः शशंस स होवाच भूयिष्ठानहं यजमाने पशून्पर्यग्रहैषमकनिष्ठा उ मामा-गमिष्यन्तीति तस्मै ह यथा महद्भ्य ऋत्विग्भ्य एवं निनाय तदेतत्पशव्यं च स्वर्ग्यं च शस्त्रं तस्मादेतच्छंसति २४

दूरोहणं रोहति तस्योक्तम्ब्राह्मणमैन्द्रे पशुकामस्य रोहेदैन्द्रा वै पशवस्तज्जागतं स्याज्जागता वै पशवस्तन्महासूक्तं स्याद्भूयिष्ठेष्वेव तत्पशुषु यजमानम्प्रति-ष्ठापयति बरौ रोहेत्तन्महासूक्तं च जागतं चैन्द्रावरुणे प्रतिष्ठाकामस्य रोहे-देतद्देवता वा एषा होत्रैतत्प्रतिष्ठा यदैन्द्रावरुणा तदेनत्स्वायामेव प्रतिष्ठाया-मन्ततः प्रतिष्ठापयति यदेवैन्द्रावरुणा३ एषा ह वा अत्र निविन्निविदा वै कामा आप्यन्ते स यद्यैन्द्रावरुणे रोहेत्सौपर्णे रोहेत्तदुपाप्त ऐन्द्रावरुणे काम उपाप्तः सौपर्णे २५

तदाहुः संशंसेत्षष्ठेऽहान् न सम्शंसेदिति संशंसेदित्याहुः कथमन्येष्वहस्सु संशंसति कथमत्र न संशंसेदित्यथो खल्वाहुर्नैव संशंसेत्स्वर्गो वै लोकः

षष्ठमहरसमायी वै स्वर्गो लोकः कश्चिद्वै स्वर्गे लोके समेतीति स यत्संशंसेत्समानं तत्कुर्यादथ यन्न संशंसतीँ तत्स्वर्गस्य लोकस्य रूपं तस्मान्न संशंसेद्यदेव न संशंसतीइँ आत्मा वै स्तोत्रियः प्राणा वालखिल्याः स यत्संशंसेदेताभ्यां देवताभ्यां यजमानस्य प्राणान्वीयाद्य एनंतत्र ब्रूयादेताभ्यां देवताभ्यां यजमानस्य प्राणान्व्यागात्प्राण एनं हास्यातिति शश्वत्तथा स्यात्तस्मान्न संशंसेत्स यदीच्चेताशंसिषं वालखिल्या हन्त पुरस्ताद्दूरोहणस्य संशंसानीति नो एव तस्याशामियात्तं यदि दर्प एव विन्देदुपरिष्टाद्दूरोहणस्यापि बहूनि शतानि शंसेद्यस्यो तत्कामाय तथा कुर्यादत्रैव तदुपाप्तमैन्द्र्यो वालखिल्यास्तासां द्वादशाक्षराणि पदानि तत्र स काम उपाप्तो य ऐन्द्रे जागतेऽथेदमैन्द्रावरुणं सूक्तमैन्द्रावरुणी परिधानीया तस्मान्न संशंसेत्तदाहुर्यथा वाव स्तोत्रमेवं शस्त्रं विहृता वालखिल्याः शस्यन्ते विहृतां स्तोत्राम् अविहृतामिति विहृतमिति ब्रूयादष्टाक्षरेण द्वादशाक्षरमिति तदाहुर्यथा वाव शस्त्रमेवं याज्या तिस्रो देवताः शस्यन्तेऽग्निरिन्द्रो वरुण इत्यथैन्द्रावरुण्या यजति कथमग्निरनन्तरित इति यो वा अग्निः स वरुणस्तदप्येतदृषिणोक्तं त्वमग्ने वरुणो जायसे यदिति तद्यदेवैन्द्रावरुण्या यजति तेनाग्निरनन्तरितोऽनन्तरितः २६ ४

## अध्याय ३० खण्डः १-१०

शिल्पानि शंसन्ति देवशिल्पान्येतेषाम्वै शिल्पानामनुकृतीह शिल्पमधिगम्यते हस्ती कंसो वासो हिरण्यमश्वतरीरथः शिल्पं शिल्पं हास्मिन्नधिगम्यते य एवं वेद यदेव शिल्पानीनात्मसंस्कृतिर्वाव शिल्पानि छन्दोमयं वा एतैर्यजमान आत्मानं संस्कुरुते नाभानेदिष्ठं शंसति रेतो वै नाभानेदिष्ठो रेतस्तत्सिञ्चति तमनिरुक्तं शंसत्यनिरुक्तं वै रेतो गुहा योन्यां सिच्यते स रेतोमिश्रो भवति क्ष्मया रेतः संजग्मानो नि षिञ्चदिति रेतःसमृद्ध्या एव तं सनाराशंसं शंसति प्रजा वै नरो वाक्शंसः प्रजास्वेव तद्वाचं दधाति तस्मादिमाः प्रजा वदन्त्यो जायन्ते तं हैके पुरस्ताच्छंसन्ति पुरस्तादायतना वागिति वदन्त उपरिष्टादेक उपरिष्टादायतना वागिति वदन्तो मध्य एव शंसेन्मध्यायतना वा इयं वाग् उपरिष्टान्नेदीयसीवोपरिष्टान्नेदीयसीव वा इयं वाक् तं होता रेतोभूतं सिक्त्वा मैत्रावरुणाय सम्प्रयछत्येतस्य त्वम्प्राणान्कल्पयेति २७

वालखिल्याः शंसति प्राणा वै वालखिल्याः प्राणानेवास्य तत्कल्पयति ता विहृताः शंसति विहृता वा इमे प्राणाः प्राणेनापानोऽपानेन व्यानः स पच्छः प्रथमे सूक्ते विहरत्यर्धर्चशो द्वितीये ऋक्शस्तृतीये स यत्प्रथमे सूक्ते विहरति प्राणं च तद्वाचं च विहरति यद्द्वितीये चक्षुश्च तन्मनश्च विहरति यत्तृतीये श्रोत्रं च तदात्मानं च विहरति ते हैके सह बृहत्यौ सह सतोबृथत्यौ विहरन्ति तदुपाप्तो विहारे कामो नेत्तु प्रगाथाः कल्पन्तेऽतिमर्शमेव विहरेत्तथा वै प्रगाथाः कल्पन्ते प्रगाथा वै वालखिल्यास्तस्मादतिमर्शमेव विहरेद्यदेवातिमर्सामात्मा वै बृहती प्राणाः सतोबृहती स बृहतीमशंसीत्स आत्माथ सतोबृहतीं ते प्राणा अथ बृहतीमथ सतोबृहतीं तदात्मानम्प्राणैः परिबृहन्नेति तस्मादतिमर्शमेव विहरे-द्यद्वेवातिमर्शाम् आत्मा वै बृहती पशवः सतोबृहती स बृहतीमशंसीत्स आत्माथ सतोबृहतीं ते पशवो ऽथ बृहतीमथ सतोबृहतीं तदात्मानम्पशुभिः परिबृहन्नेति तस्मादतिमर्शमेव विहरेद्व्येवोत्तमे सूक्ते पर्यस्यति स एव तयोर्विहारस्तस्य मैत्रावरुणः प्राणान्कल्पयित्वा ब्राह्मणाच्छंसिने सम्प्रयछत्येतं त्वम्प्रजनयेति २८

सुकीर्तिं शंसति देवयोनिर्वै सुकीर्तिस्तद्यज्ञाद्देवयोन्यै यजमानम्प्रजनयति वृषाकपिं शंसत्यात्मा वै वृषाकपिरात्मानमेवास्य तत्कल्पयति तं न्यूङ्खयत्यन्नं वै न्यूङ्खस्तदस्मै जातायान्नाद्यम्प्रतिदधाति यथा कुमाराय स्तनं स पाङ्क्तो भवति पाङ्क्तोऽयम्पुरुषः पञ्चधा विहितो लोमानि त्वङ्मांसमस्थि मज्जा स यावानेव पुरुषस्तावन्तं यजमानः संस्करोति तम्ब्राह्मणाच्छंसी जनयित्वाछावाकाय सम्प्रयछत्येतस्य त्वम्प्रतिष्ठां कल्पयेति २९

एवयामरुतं शंसति प्रतिष्ठा वा एवयामरुत्प्रतिष्ठामेवास्य तत्कल्पयति तं न्यूङ्खयत्यन्नं वै न्यूङ्खोऽन्नाद्यमेवास्मिंस्तद्दधाति स जागतो वातिजागतो वा सर्वं वा इदं जागतं वातिजागतं वा स उ मारुत आपो वै मरुत आपो-ऽन्नमभिपूर्वमेवास्मिंस्तदन्नाद्यं दधाति तान्येतानि सहचराणीत्याचक्षते नाभा-नेदिष्ठं वालखिल्या वृषाकपिमेवयामरुतं तानि सह वा शंसेत्सह वा न शंसेद्यदेनानि नाना शंसेद्यथा पुरुषं वा रेतो वा विछिन्द्यात्तादृक्तत्तस्मादेनानि सह वा शंसेत्सह वा न शंसेत्स ह बुलिल आश्वतर आश्विर्वैश्वजितो होता सन्नीक्षां चक्र एषां वा एषां शिल्पानां विश्वजिति सांवत्सरिके द्वे मध्यंदिन-

मभि प्रत्येतोर्हन्ताहमित्थमेवयामरुतं शंसयानीति तद्ध तथा शंसयां चकार तद्ध तथा शस्यामने गौश्ल आजगाम स होवाच होतः कथा ते शस्त्रं विचक्रम्प्लवत इति किह्यूह्यभूदित्येवयामरुदयमुत्तरतः शस्यत इति स होवाचैन्द्रो वै मध्यंदिनः कथेन्द्रम्मध्यंदिनान्निनीषसीति नेन्द्रम्मध्यंदिनान्निनीषामीति होवाच छन्दस्त्विदममध्यंदिनसाच्ययं जागतो वातिजागतो वा सर्वं वा इदं जागतं वातिजागतं वा स उ मारुतो मैव शंसिष्टेति स होवाचारमाछावकेत्यथ हास्मिन्ननुशासनमीषे स होवाचैन्द्रमेष विष्णुन्यङ्गं शंसत्वथ त्वमेतं होतरुपरिष्टाद्रौद्र्यै धाय्यायै पुरस्तान्मारुतस्याप्यस्याथा इति तद्ध तथा शंसयां चकार तदिदमप्येतर्हि तथैव शस्यते ३०

तदाहुर्यदस्मिन्विश्वजित्यतिरात्र एवं षष्ठेऽहनि कल्पते यज्ञः कल्पते यजमानस्य प्रजातिः कथमत्राशस्त एव नाभानेदिष्ठो भवत्यथ मैत्रावारुणो वालखिल्याः शंसति ते प्राणा -- रेतो वा अग्रेऽथ प्राणा -- एवम्ब्राह्मणाच्छन्स्यशस्त एव नाभानेदिष्ठो भवत्यथ वृषाकपिं शंसति स आत्मा -- रेतो वा अग्रेऽथात्मा -- कथमत्र यजमानस्य प्रजातिः कथम्प्राणा अविक्लृप्ता भवन्तीति यजमानं ह वा एतेन सर्वेण यज्ञक्रतुना संस्कुर्वन्ति स यथा गर्भो योन्यामन्तरेवं सम्भवञ्छेते न वै सकृदेवाग्रे सर्वः सम्भवत्येकैकं वा अङ्गं सम्भवतः सम्भवतीति सर्वाणि चेत्समानेऽहन्क्रियेरन्कल्पत एव यज्ञः कल्पते यजमानस्य प्रजातिरथैतं होतैवयामरुतं तृतीयसवने शंसति तद्यास्य प्रतिष्ठा तस्यामेवैनं तदन्ततः प्रतिष्ठापयति ३१

छन्दसां वै षष्ठेनाह्नाप्तानां रसोऽत्यनेदत्स प्रजापतिरबिभेत्पराङयं छन्दसां रसो लोकानत्येष्यतीति तम्परस्ताच्छन्दोभिः पर्यगृह्णान्नाराशंस्या गायत्र्या रैभ्या त्रिष्टुभः पारिक्षित्या जगत्याः कारव्ययानुष्टुभस्तत्पुनश्छन्दस्सु रसमदधात्सरसैर्हास्य छन्दोभिरिष्टम्भवति सरसैश्छन्दोभिर्यज्ञं तनुते य एवं वेद नाराशंसीः शंसति प्रजा वै नरो वाक्शंसः प्रजास्वेव तद्वाचं दधाति तस्मादिमाः प्रजा वदन्त्यो जायन्ते य एवं वेद यदेव नाराशंसीः शन्सन्तो वै देवाश्च ऋषयश्च स्वर्गं लोकमायंस्तथैवैतद्यजमानाः शंसन्त एव स्वर्गं लोकं यन्ति ताः प्रग्राहं शंसति यथा वृषाकपिं वार्षाकपं हि वृषाकपेस्तन्नचा यमेति तासु न न्यूङ्खयेन्नीवैव नर्देत्स हि तासां न्यूङ्खो रैभीः शंसति रेभन्तो वै देवाश्च ऋषयश्च

स्वर्गं लोकमायंस्तथैवैतद्यजमाना रेभन्त एव स्वर्गं लोकं यन्ति ताः प्रग्राहं शंसति यथा वृषाकपिं वार्षाकपं हि वृषाकपेश्तन्नयायमेति तासु न न्यूङ्खयेन्नीवैव नर्देत्स हि तासां न्यूङ्खः पारिक्षितीः शंसत्यग्निर्वै परिक्षिदग्निर्हीमाः प्रजाः परिक्षेत्यग्निं हीमाः प्रजाः परिक्षियन्त्यग्नेरेव सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद यदेव पारिक्षिती३ः संवत्सरो वै परिक्षित्संवत्सरो हीमाः प्रजाः परिक्षेति संवत्सरं हीमाः प्रजाः परिक्षियन्ति संवत्सरस्यैव सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद ताः प्रग्राहं शंसति यथा वृषाकपिं वार्षाकपं हि वृषाकपेस्तन्नयायमेति तासु न न्यूङ्खयेन्नीवैव नर्देत्स हि तासां न्यूङ्खः कारव्याः शंसति देवा वै यत्किंच कल्याणं कर्माकुर्व-स्तत्कारव्याभिराप्नुवंस्तथैवैतद्यजमाना यत्किंच कल्याणं कर्म कुर्वन्ति तत्का-रव्याभिराप्नुवन्ति ताः प्रग्राहं शंसति यथा वृषाकपिं वार्षाकपं हि वृषा-कपेस्तन्नयायमेति तासु न न्यूङ्खयेन्नीवैव नर्देत्स हि तासां न्यूङ्खो दिशां क्लृप्तीः शंसति दिश एव तत्कल्पयति ताः पञ्च शंसति पञ्च वा इमा दिशश्चतस्रस्तिरश्चय एकोर्ध्वा तासु न न्यूङ्खयेन्नेवैव च निनर्देन्नेदिमा दिशो न्युङ्खयानीति ता अर्धर्चशः शंसति प्रतिष्ठाया एव जनकल्पाः शंसति प्रजा वै जनकल्पा दिश एव तत्कल्पयित्वा तासु प्रजाः प्रतिष्ठापयति तासु न न्यूङ्खयेन्नेवैव च निनर्देन्नेदिमाः प्रजा न्यूङ्खयानीति ता अर्धर्चशः शंसति प्रतिष्ठाया एवेन्द्रगाथाः शंस-तीन्द्रगाथाभिर्वै देवा असुरानभिगायाथैनानत्यायंस्तथैवैतद्यजमाना इन्द्रगा-थाभिरेवाप्रियम्भ्रातृव्यमभिगायाथैनमतियन्ति ता अर्धर्चशः शंसति प्रतिष्ठाया एव ३२

ऐतशप्रलापं शंसत्यैतशो ह वै मुनिरग्नेरायुर्ददर्श यज्ञस्यायातयाममिति हैक आहुः सोऽब्रवीत्पुत्रान्पुत्रका अग्नेरायुरदर्शं तदभिलपिष्यामि यत्किंच वदामि तन्मे मा परिगातेति स प्रत्यपद्यतैता अश्वा आ प्लवन्ते प्रतीपम्प्रातिसत्वनमिति तस्याभ्यग्निरैतशायन एत्याकालेऽभिहाय मुखमप्यगृह्णाददृपन्नः पितेति तं होवाचापेह्यलसोऽभूर्यो मे वाचमवधीः शतायुं गामकरिष्यं सहस्रायुम्पुरुष-म्पापिष्ठां ते प्रजां करोमि यो मेत्थमसक्था इति तस्मादाहुरभ्यग्नय ऐतशायना और्वाणाम्पापिष्ठा इति तं बैके भूयांसं शंसन्ति स न निषेधेद्यावत्कामं शंसेत्येव ब्रूयादायुर्वा ऐतशप्रलाप आयुरेव तद्यजमानस्य प्रतारयति य एवं वेद यदे-वैतशप्रलापाः छन्दसां हैष रसो यदैतशप्रलापश्छन्दस्स्वेव तद्रसं दधाति

सरसैर्हास्य छन्दोभिरिष्टम्भवति सरसैश्छन्दोभिर्यज्ञं तनुते य एवं वेद यद्वेवैतशप्रलापाः अयातयामा वा अक्षितिरैतशप्रलापोऽयातयामा मे यज्ञेऽसदक्षितिर्मे यज्ञेऽसदिति तं वा एतमैतशप्रलापं शंसति पदावग्राहं यथा निविदं तस्योत्तमेन पदेन प्रणौति यथा निविदः प्रवल्हिकाः शंसति प्रवल्हिकाभिर्वै देवा असुरान्प्रवल्ह्याथैनानत्यायन्स्तथैवैतद्यजमानाः प्रवल्हिकाभिरेवाप्रियम्भ्रातृव्यम्प्रवल्ह्याथैनमतियन्ति ता अर्धर्चशः शंसति प्रतिष्ठाया एवाजिज्ञसेन्याः शंसत्याजिज्ञसेन्याभिर्वै देवा असुरानाज्ञायाथैनानत्यायंस्तथैवैतद्यजमाना आजिज्ञासेन्याभिरेवाप्रियम्भ्रातृव्यमाज्ञायाथैनमतियन्ति ता अर्धर्चशः शंसति प्रतिष्ठाया एव प्रतिराधं शंसति प्रतिराधेन वै देवा असुरान्प्रतिराध्याथैनानत्यायंस्तथैवैतद्यजमानाः प्रतिराधेनैवाप्रियाम्भ्रातृव्यम्प्रतिराध्याथैनमतियन्त्यतिवादं शंसत्यतिवादेन वै देवा असुरानत्युद्याथैनानत्यायंस्तथैवैतद्यजमाना अतिवादेनैवाप्रियम्भ्रातृव्यमत्युद्याथैनमतियन्ति तमर्धर्चशः शंसति प्रतिष्ठाया एव ३३

देयनीथं शंसत्यादित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोकेऽस्पर्धन्त वयम्पूर्व एष्यामो वयमिति ते हाङ्गिरसः पूर्वे श्वःसुत्यां स्वर्गस्य लोकस्य ददृशुस्तेऽग्निम्प्रजिघ्युरङ्गिरसां वा एकोऽग्निः -- परेह्यादित्येभ्यः श्वःसुत्यां स्वर्गस्य लोकस्य प्रब्रूहीति ते हादित्या अग्निमेव दृष्ट्वा सद्यःसुत्यां स्वर्गस्य लोकस्य ददृशुस्तानेत्याब्रवीच् छ्वःसुत्यां वः स्वर्गस्य लोकस्य प्रब्रूम इति ते होचुरथ वयं तुभ्यं सद्यःसुत्यां स्वर्गस्य लोकस्य प्रब्रूमस्त्वयैव वयं होत्रा स्वर्गं लोकमेष्याम इति स तथेत्युक्त्वा प्रत्युक्तः पुनराजगाम ते होचुः प्रावोचाः इति प्रावोचमिति होवाचाथो मे प्रतिप्रावोचन्निति नो हि न प्रत्यज्ञास्थाः इति प्रति वा अज्ञासमिति होवाच यशसा वा एषोऽभ्यैति य आर्त्विज्येन तं यः प्रतिरुन्धेद्यशः स प्रतिरुन्धेत्तस्मान्न प्रत्यरौत्सीति यदि त्वस्मादपोज्जिगांसेद्यज्ञेनास्मादपोदियात्यदि यदि त्वयज्यः स्वयमपोदितं तस्मात् ३४

ते हादित्यानङ्गिरसोऽयाजयंस्तेभ्य याजयद्भ्य इमाम्पृथिवीम्पूर्णां दक्षिणानामददुस्तानियम्प्रतिगृहीतातपत्तां न्यवृञ्जन्सा सिंही भूत्वा विजृम्भन्ती जनानचरत्तस्याः शोचत्या इमे प्रदराः प्रादीर्यन्त येऽस्या इमे प्रदराः समेव हैव ततः पुरा तस्मादाहुर्न निवृत्तदक्षिणाम्प्रतिगृह्णीयान्नेन्मा शुचा विद्धा शुचा विध्या-

दिति यदि त्वेनाम्प्रतिगृह्णीयादप्रियायैनाम्भ्रातृव्याय दद्यात्परा हैव भवत्यथ योऽसौ तपतीँ एषोऽश्वः श्वेतो रूपं कृत्वाश्वाभिधान्यपिहितेनात्मना प्रतिचक्रम इमं वो नयाम इति स एष देवनीथोऽनूच्यत आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन्तां ह जरितर्न प्रत्यायन्निति न हि त इमाम्प्रत्यायंस्तामु ह जरितः प्रत्यायन्निति प्रति हि तेऽमुमायंस्तां ह जरितर्न प्रत्यगृभ्णन्निति न हि त इमाम्प्रत्यगृभ्णांस्तामु ह जरितं प्रत्यगृभ्णन्निति प्रति हि तेऽमुमगृभ्णन्नहा नेदसन्नविचेतनानीत्येष ह वा अह्नां विचेतयिता जज्ञा नेदसन्नपुरोगवास इति दक्षिणा वै यज्ञानाम्पुरोगवी यथा ह वा इदमनोऽपुरोगवं रिष्यत्येवं हैव यज्ञोऽदक्षिणो रिष्यति तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवत्यप्यल्पिकाप्युत श्वेत आशुपत्वा उतो पद्याभिर्जविष्ठः उतेमाशु मानम्पिपर्ति आदित्या रुद्रा वसवस्त्वेळते इदं राधः प्रति गृभ्णीथ्यङ्गि र इति प्रतिग्रहमेव तद्राधस ऐछन्निदं राधो बृहत्पृथु देवा ददत्वा वरम्तद्वो अस्तु सुचेतनम्युष्मे अस्तु दिवे-दिवे प्रत्येव गृभायतेति प्रत्येवैनं तदजग्रभैषं तं वा एतं देवनीथं शंसति पदावग्राहं यथा निविदं तस्योत्तमेन पदेन प्रणौति यथा निविदः ३५

भूतेछदः शंसति भूतेछद्भिर्वै देवा असुरानुपासचन्तोतेव युद्धेनोतेव मायया तेषां वै देवा असुराणाम्भूतेछद्भिरेव भूतं छादयित्वाथैनानत्यायंस्तथैवैतद्यजमाना भूतेछद्भिरेवाप्रियस्य भ्रातृव्यस्य भूतं छादयित्वाथैनमतियन्ति ता अर्धर्चशः शंसति प्रतिष्ठाया एवाहनस्याः शंसत्याहनस्याद्वै रेतः सिच्यते रेतसः प्रजाः प्रजायन्ते प्रजातिमेव तद्दधाति ता दश शंसति दशाक्षरा विराळ् अन्नं विराळ् अन्नाद्रेतः सिच्यते रेतसः प्रजाः प्रजायन्ते प्रजातिमेव तद्दधाति ता न्यूङ्खयत्यन्नं वै न्यूङ्खोऽन्नाद्रेतः सिच्यते रेतसः प्रजाः प्रजायन्ते प्रजातिमेव तद्दधाति दधिक्राव्णो अकारिषमिति दाधिक्रीं शंसति देवपवित्रं वै दधिक्रा इदं वा इदं व्याहनस्यां वाचमवादीत्तद्देवपवित्रेण वाचम्पुनीते सानुष्टुब्भवति वाग्वा अनुष्टुप्तत्स्वेन छन्दसा वाचम्पुनीते सुतासो मधुमत्तमा इति पावमानीः शंसति देवपवित्रं वै पावमान्य इदं वा इदं व्याहनस्यां वाचमवादीत्तद्देवपवित्रेणैव वाचम्पुनीते ता अनुष्टुभो भवन्ति वाग्वा अनुष्टुप्तत्स्वेनैव छन्दसा वाचम्पुनीतेऽव द्रप्सो अंशुमतीमतिष्ठदित्यैन्द्राबार्हस्पत्यं तृचं शंसति विशो अदेवीरभ्याच-रन्तीर्बृहस्पतिना युजेन्द्रः ससाह इत्यसुरविशं ह वै देवानभ्युदाचार्य आसीत्स इन्द्रो बृहस्पतिनैव युजासुर्यं वर्णमभिदासन्तमपाहंस्तथैवैतद्यजमाना इन्द्रा-

बृहस्पतिभ्यामेव युजासुर्यं वर्णमभिदासन्तमपघ्नते तदाहुः संशंसेत्षष्ठेऽहान् न संशंसेदिति संशंसेदित्याहुः कथमन्येष्वहस्सु संशंसति कथमत्र न संशं-सेदित्यथो खल्वाहुर्नैव संशंसेत्स्वर्गो वै लोकः षष्ठमहरसमायी वै स्वर्गो लोकः कश्चिद्वै स्वर्गे लोके समेतीति स यत्संशंसेत्समानं तत्कुर्यादथ यन्न संशंसतीँ तत्स्वर्गस्य लोकस्य रूपं तस्मान्न संशंसेद्यदेव न संशंसतीँ एतानि वा अत्रोक्थानि नाभानेदिष्ठो वालखिल्या वृषाकपिरेवयामरुत्स यत्संशंसेदपैव स एतेषु कामं राध्नुयादैन्द्रो वृषाकपिः सर्वाणि छन्दांस्यैतशप्रलापस्तत्र स काम उपाप्तो य ऐन्द्रे जागतेऽथेदमैन्द्राबर्हस्पत्यं सूक्तमैन्द्राबार्हस्पत्या परिधानीय तस्मान्न संशंसेन्न संशंसेत् ३६ ५

इति षष्ठपञ्चिका समाप्ता

## पञ्चिका ७

### अध्याय ३१ खण्डः १

अथातः पशोर्विभक्तिस्तस्य विभागं वक्ष्यामो हनू सजिह्वे प्रस्तोतुः श्येनं वक्ष उद्गातुः कण्ठः काकुद्रः प्रतिहर्तुर्दक्षिणा श्रोणिर्होतुः सव्य ब्रह्मणो दक्षिणं सक्थि मैत्रावरुणस्य सव्यम्ब्राह्मणाच्छंसिनो दक्षिणम्पार्श्वं सांसमध्वर्योः सव्यमुपगा-तॄणां सव्योऽअः प्रतिप्रस्थातुर्दक्षिणं दोर्नेष्टुः सव्यम्पोतुर्दक्षिण ऊरुरछावाकस्य सव्य आग्नीध्रस्य दक्षिणो बाहुरात्रेयस्य सव्यः सदस्यस्य सदं चानूकं च गृहपतेर्दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य सव्यौ पादौ गृहपतेर्भार्यायै व्रतप्रदस्यौष्ठ एनयोः साधारणो भवति तं गृहपतिरेव प्रशिंष्याज् जाघनीम्पत्नीभ्यो हरन्ति ताम्ब्राह्मणाय दद्युः स्कन्ध्याश्च मनिकास्तिस्रश्च कीकसा ग्रावस्तुतस्तिस्रश्चैव कीकसा अर्धं च वैकर्तस्योन्नेतुरर्धं चैव वैकर्तस्य क्लोमा च शमितुस्तद्ब्राह्मणाय दद्याद्यद्यब्राह्मणः स्याच् छिरः सुब्रह्मण्यायै यः श्वःसुत्याम्प्राह तस्याजिनमिळ सर्वेषां होतुर्वा ता वा एताः षट्त्रिंशतमेकपा यज्ञं वाहन्ति षट्त्रिंशदक्षरा वै बृहती बार्हताः स्वर्गा लोकाः प्रानांश्चैव तत्स्वर्गांश्च लोकानाप्नुवन्ति प्राणेषु चैव तत्स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति स एष स्वर्ग्यः पशुर्य एनमेवं विभजन्त्यथ येऽतोऽन्यथा तद्यथा सेलगा वा पापकृतो वा पशुं विम-थ्नीरंस्तादृक्तत्तां वा एताम्पशोर्विभक्तिं श्रौतऋषिर्देवभागो विदां चकार तामु हाप्रोच्यैवास्माल्लोकादुच्चक्राम तामु ह गिरिजाय बाभ्रव्यायामनुष्यः प्रोवाच

ततो हैनामेतदर्वाङ्गनुष्या अधीयतेऽधीयते १ १

अध्याय ३२ खण्डः १-११

तदाहुर्य आहिताग्निरुपवसथे म्रियेत कथमस्य यज्ञः स्यादिति नैनं याजयेदिति आहुरनभिप्राप्तो हि यज्ञम्भवतीति तदाहुर्य आहिताग्निरधिश्रितेऽग्निहोत्रे सांनाय्ये वा हविष्षु वा म्रियेत का तत्र प्रायश्चित्तिरित्यत्रैवैनान्यनुपर्यादध्याद्यथा सर्वाणि संदह्येरन्सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निरासन्नेषु हविष्षु म्रियेत का तत्र प्रायश्चित्तिरिति याभ्य एव तानी देवताभ्यो हवींषि गृहीतानी भवन्ति ताभ्यः स्वाहेत्येवैनान्याहवनीये सर्वहुन्ति जुहुयात्सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निः प्रवसन्म्रियेत कथमस्याग्निहोत्रं स्यादित्यभिवान्यवत्सायाः पयसा जुहुयादन्यदिवैतत्पयो यदभिवान्यवत्साया अन्यदिवैतदग्निहोत्रं यत्प्रेतस्यापि वा यत एव कुतश्च पयसा जुहुयुरथाप्याहुरेवमेवैनानजस्रानजुह्वत इन्धीरन्ना शरीराणामाहर्तोरिति यदि शरीराणि न विद्येरन्पर्णशरः षष्टिं त्रीणि च शतान्याहृत्य तेषाम्पुरुषरूपकमिव कृतिवा तस्मिंस्तामावृतं कुर्युरथैनाञ्छरीरैराहृतैः संस्पर्श्योद्वासयेयुरध्यर्धशतं काये सक्थिनी द्विपञ्चाशे च विंशे चोरू द्विपञ्चविंशे शेषां तु शिरस्युपरि दध्यात्सा तत्र प्रायश्चित्ति २

तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत्का तत्र प्रायश्चित्तिरिति तामभिमन्त्रयेत यस्माद्भीषा निषीदसि ततो नो अभयं कृधि पशून्नः सर्वान्गोपाय नमो रुद्राय मीळ्हुष इति तामुत्थापयेदुदस्थाद्देव्यदितिरायुर्यज्ञपतावधातिन्द्राय कृणवती भागम्मित्राय वरुणाय चेत्यथास्या उदपात्रमूधसि च मुखे चोपगृह्णीयादथैनाम्ब्राह्मणाय दद्यात्सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना वाश्येत का तत्र प्रायश्चित्तिरित्यशनायां ह वा एषा यजमानस्य प्रतिख्याय वाश्यते तामन्नमप्यादयेच्छान्त्यै शान्तिर्वा अन्नं सूयवसाद्भगवती हि भूया इति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्पन्देत का तत्र प्रायश्चित्तिरिति सा यत्तत्र स्कन्दयेत्तदभिमृश्य जपेद्यदद्य दुग्धम्पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः पयो गृहेषु पयो अघ्न्यायाम्पयो वत्सेषु पयो अस्तु तन्मयीति तत्र यत्परिशिष्टं स्यात्तेन जुहुयाद्यद्यलं होमाय स्याड् यद्यु वै सर्वं सिक्तं स्यादथान्यामाहूय तां दुग्ध्वा तेन जुहुयादा त्वेव श्रद्धायै होतव्यं सा तत्र प्रायश्चित्तिः ३

तदाहुर्यस्य सायंदुग्धं सांनाय्यं दुष्येद्वापहरेद्वा का तत्र प्रायश्चित्तिरिति प्रातर्दुग्धं द्वैधं कृत्वा तस्यान्यतराम्भक्तिमातच्य तेन यजेत सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य प्रातर्दुग्धं संनाय्यं दुष्येद्वापहरेद्वा का तत्र प्रायश्चित्तिरित्यैन्द्रं वा माहेन्द्रं वा पुरोळाशां तस्य स्थाने निरुप्य तेन यजेत सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य सर्वमेव सांनाय्यं दुष्येद्वापहरेद्वा का तत्र प्रायश्चित्तिरित्यैन्द्रं वा माहेन्द्रं वेति समानं सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य सर्वारयेव हवींषि दुष्येयुर्वापहरेयुर्वा का तत्र प्रायश्चित्तिरित्याज्यस्यैनानि यथादेवतम्परिकल्प्य तयाज्यहविषेष्ट्या यजेता- तोऽन्यामिष्टिमनुल्बणां तन्वीत यज्ञो यज्ञस्य प्रायश्चित्तिः ४

तदाहुर्यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत का तत्र प्रायश्चित्तिरिति सर्वमेवैन- त्स्रुच्यभिपर्यासिच्य प्राङुदेत्याहवनीये हैतां समिधमभ्यादधात्यथोत्तरत आह- वनीयस्योष्णम्भस्म निरूह्य जुहुयान्मनसा वा प्राजापत्यया वर्चा तद्धुतं चाहुतं च स यद्येकस्मिनुन्नीते यदि द्वयोरेष एव कल्पस्तच्चेद्व्यपनेतुं शक्नुया- न्निषिच्यैतद्दुष्टमदुष्टमभिपर्यासिच्य तस्य यथोन्नीती स्यात्तथा जुहुयात्सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्निहोत्रमधिश्रितं स्कन्दति वा विष्यन्दते वा का तत्र प्रायश्चित्तिरिति तदद्भिरुपनिनयेच्छान्त्यै शान्तिर्वा आपोऽथैनद्दक्षिणेन पाणि- नाभिमृश्य जपति दिवं तृतीयं देवान्यज्ञोऽगात्ततो मा द्रविणमाष्टान्तरिक्षं तृतीयम्पितॄन्यज्ञोऽगात्ततो मा द्रविणमाष्ट पृथिवीं तृतीयम्मनुष्यान्यज्ञोऽगात्ततो मा द्रविणमाष्ट ययोरोजसा स्कभिता रजांसीति वैष्णवारुणीमृचं जपति विष्णुर्वै यज्ञस्य दुरिष्टम्पाति वरुणः स्विष्टं तयोरुभयोरेव शान्त्यै सा तत्र प्राय- श्चित्तिस्तदाहुर्यस्याग्निहोत्रमधिश्रितम्प्राङुदायन्स्खलते वापि वा भ्रंशते का तत्र प्रायश्चित्तिरिति स यद्युपनिवर्तयेत्स्वर्गाल्लोकाद्यजमानमावर्तयेदत्रैवास्मा उ- पविष्टायैतमग्निहोत्रपरीशेषमाहरेयुस्तस्य यथोन्नीती स्यात्तथा जुहुयात्सा तत्र प्रायश्चित्तिस्तदाहुरथ यदि स्रुग्भिद्येत का तत्र प्रायश्चित्तिरित्यन्याम् स्रुचमाहृत्य जुहुयादथैतां स्रुचम्भिन्नामाहवनीयेऽभ्यादध्यात्प्राग्दण्डाम्प्रत्यक्पुष्करां सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याहवनीये हाग्निर्विद्येताथ गार्हपत्य उपशाम्येत्का तत्र प्रायश्चित्तिरिति स यदि प्राञ्चमुद्धरेत्प्रायतनाच्च्यवेत यत्प्रत्यञ्चमसुरवद्यज्ञं तन्वीत यन्मन्थेद्भ्रातृव्यं यजमानस्य जनयेद्यदनुगमयेत्प्राणो यजमानं जह्यात्सर्वमेवैनं सहभस्मानम् समोप्य गार्हपत्यायतने निधायाथ प्राञ्चमाहवनीयमुद्धरेत्सा तत्र प्रायश्चित्तिः ५

तदाहुर्यस्याग्नावग्निमुद्धरेयुः का तत्र प्रायश्चित्तिरिति स यद्यनुपश्येदुदूह्य पूर्वमपरं निदध्याद्यद्यु नानुपश्येत्सोऽग्नयेऽग्निवतेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवक्ये अग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निनेत्याहुतिं वाहवनीये जुहुयादग्नयेऽग्निवते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य गार्हपत्याहवनीयौ मिथः संसृज्येयातां का तत्र प्रायश्चित्तिरिति सोऽग्नये वीतयेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्न आ याहि वीतये यो अग्निं देववीतय इत्याहुतिं वाहवनीये जुहुयादग्नये वीतये स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य सर्व एवाग्नयो मिथः संसृज्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये विविचयेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये स्वर्ण वस्तोरुषसामरोचि त्वामग्ने मानुषीरीळते विश इत्याहुतिं वाहवनीये जुहुयादग्नये विविचये स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्नयो अन्यैरग्निभिः संसृज्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये क्षामवतेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अक्रन्ददग्नु स्तनयन्निव द्यौरधा यथा नः पितरः परास इत्याहुतिं वाहवनीये जुहुयादग्नये क्षामवते स्वाहेति स तात्र प्रायश्चित्तिः ६

तादाहुर्यस्याग्नयो ग्राम्येणाग्निना संदह्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये संवर्गायाष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये कुवित्सु नो गविष्टये मा नो अस्मिन्महाधन इत्याहुतिं वाहवनीये जुहुयादग्नये संवर्गाय स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्नयो दिव्येनाग्निना संसृज्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नयेऽप्सुमतेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अप्स्वग्ने सधिष्टव मयो दधे मेधिरः पूतदक्ष इत्याहुतिं वाहवनीये जुहुयादग्नयेऽप्सुमते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्नयः शवाग्निना संसृज्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये शुचयेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्निः शुचिव्रततम उदग्ने शुचयस्तवेत्यहुतिं वाहवनीये जुहुयादग्नये शुचये स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्नय आरण्येनाग्निना संदह्येरन्का तत्र प्रायश्चित्तिरिति समेवारोपयेदरणी वोल्मुकं वा मोक्षयेद्यद्याहवनीयाद्यदि गार्हपत्याद्यदि न शक्नुयात्सोऽग्नये संवर्गायाष्टाकपालम्पुरोळाशं निर्वपेत्तस्योक्ते याज्यानुवाक्ये आहुतिं वाहवनीये जुहुयादग्नये संवर्गाय स्वाहेति सा तत्र प्रायश्चित्तिः ७

तदाहुर्य आहिताग्निरुपवसथेऽश्रु कुर्वीत का तत्र प्रायश्चित्तिरिति सोऽग्नये व्रतभृतेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये त्वमग्ने व्रतभृच्छुचिर्व्रतानि बिभ्रद्व्रतपा अदब्ध इत्याहुतिं वाहवनीये जुहुयादग्नये व्रतभृते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निरुपवसथेऽव्रत्यमापद्येत का तत्र प्रायश्चित्तिरिति सोऽग्नये व्रतपतयेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये त्वमग्ने व्रतपा असि यद्वो वयम्प्रमिनाम व्रतानीत्याहुतिं वाहवनीये जुहुयादग्नये व्रतपतये स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निरमावास्याम्पौर्णमासीं वातीयात्का तत्र प्रायश्चित्तिरिति सोऽग्नये पथिकृतेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये वेत्था हि वेदोःऽध्वन आ देवानामपि पन्थामगन्मेत्याहुतिं वाहवनीये जुहुयादग्नये पथिकृते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य सर्व एवाग्नय उपशाम्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये आ याहि तपसा जनेष्वा नो याहि तपसा जनेष्वित्याहुतिं वाहवनीये जुहुयादग्नये तपस्वते जनद्वते पावकवते स्वाहेति सा तत्र प्रायश्चित्तिः ८

तदाहुर्य आहिताग्निराग्रयणेनानिष्ट्वा नवान्नम्प्राश्नीयात्का तत्र प्रायश्चित्तिरिति सोऽग्नये वैश्वानराय द्वादशकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये वैश्वानरो अजीजनत्पृष्टो दिवि पृष्टो अग्निः पृथिव्यामित्याहुतिं वाहवनीये जुहुयादग्नये वैश्वानराय स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि कपालं नश्येत्का तत्र प्रायश्चित्तिरिति सोऽश्विभ्यां द्विकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अश्विना वर्तिरस्मदा गोमता नासत्या रथेनेत्याहुतिं वाहवनीये जुहुयादश्विभ्यां स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि पवित्रं नश्येत्का तत्र प्रायश्चित्तिरिति सोऽग्नये पवित्रवतेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये पवित्रं ते विततम्ब्रह्मणस्पते तपोसः पवित्रं विततं दिवस्पद इति आहुतिं वाहवनीये जुहुयादग्नये पवित्रवते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि हिरण्यं नश्येत्का तत्र प्रायश्चित्तिरिति सोऽग्नये हिरण्यवतेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये हिरण्यकेशो रजसो विसार आ ते सुपर्णा अमिनन्तँ एवैरिति आहुतिं वाहवनीये जुहुयादग्नये हिरण्यवते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि प्रातरस्नातोऽग्निहोत्रं जुहुयात्का तत्र प्रायश्चित्तिरिति सोऽग्नये वरुणायाष्टाकपा-

लम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये त्वं नो अग्ने वरुणस्य विद्वान्स त्वं नो अग्नेऽवमो भवोतीत्याहुतिं वाहवनीये जुहुयादग्नये वरुणाय स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि सूतकान्नम्प्राश्नीयात्का तत्र प्रायश्चित्तिरिति सोऽग्नाये तन्तुमतेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये तन्तुं तन्वन्नजसो भानुमन्विह्यच्चानहो नह्यतनोत सोम्या इति आहुतिं वाहवनीये जुहुयादग्नये तन्तुमते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्जीवे मृतशब्दं श्रुत्वा का तत्र प्रायश्चित्तिरिति सोऽग्नाये सुरभिमतेऽष्टाकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्निर्होता न्यसीदद्यजीयान्साध्वीमकर्देववीतिं नो अद्येत्याहुतिं वाहवनीये जुहुयादग्नये सुरभिमते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यस्य भार्या गौर्वा यमौ जनयेत्का तत्र प्रायश्चित्तिरिति सोऽग्नये मरुत्वते त्रयोदशकपालम्पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये मरुतो यस्य हि चयेऽरा इवेदचरमा अहेवेत्याहुतिं वाहवनीये जुहुयादग्नये मरुत्वते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुरपत्नीकोऽप्यग्निहोत्रमाहरेन्नाहरेदिति आहरेदित्याहुर्यदि नाहरेदनद्धा पुरुषः कोऽनद्धापुरुष इति न देवान्न पितॄन्न मनुष्यानिति तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेत्तदेषाभि यज्ञगाथा गीयते १५

यजेत्सौत्रामरयामपत्नीकोऽप्यसोमपः मातापितृभ्यामनृणार्थाद्यजेति वचनाच्छ्रुतिरिति तस्मात्सौम्यं याजयेत् ९

तदाहुर्वाचापत्नीकोऽग्निहोत्रं कथमेव जुहोति निविष्टे मृता पत्नी नष्टा वाग्निहोत्रं कथमग्निहोत्रं जुहोति पुत्रान्पौत्रान्नप्तृनित्याहुरस्मिंश्च लोकेऽमुष्मिंश्चास्मिँल्लोकेऽयं स्वर्गोऽस्वर्गेण स्वर्गं लोकमारुरोहेत्यमुष्यैव लोकस्य संततिं धारयति यस्यैषाम्पत्नीं नैछेत्तस्मादपत्नीकस्याधानं कुर्वन्त्यपत्नीकोऽग्निहोत्रं कथमग्निहोत्रं जुहोति श्राद्ध पत्नी सत्यं यजमानः श्रद्धा सत्यं तदिति उत्तमम्मिथुनं श्रद्धया सत्येन मिथुनेन स्वर्गाँल्लोकाञ्जयतीति १०

तदाहुर्यद्दर्शपूर्णमासयोरुपवसति न ह वा अव्रतस्य देवा हविरश्नन्ति तस्मादुपवसत्युत मे देवा हविरश्नीयुरिति पूर्वाम्पौर्णमासीमुपवसेदिति पैङ्ग्यमुत्तरामिति कौषीतकं या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूर्याम्पर्यस्तमियादभ्युदियादिति

सा तिथिः पूर्वाम्पौर्णमासीमुपवसेदनिर्ज्ञाय पुरस्तादमावास्यायां चन्द्रमसं यदुपैति यद्यजते तेन सोमं क्रीणन्ति तेनोत्तरामुत्तरामुपवसेदुत्तराणि ह वै सोमो यजते सोममनु दैवतमेतद्वै देवसोमं यच्चन्द्रमस्तस्मादुत्तरामुपवसेत् ११

तदाहुर्यस्याग्निमनुद्धृतमादित्योऽभ्युदियाद्वाभ्यस्तमियाद्वा प्रणीतो वा प्राग्घोमादुपशाम्येत्का तत्र प्रायश्चित्तिरिति हिरण्यम्पुरस्कृत्य सायमुद्धरेज् ज्योतिर्वै शुक्रं हिरण्यं ज्योतिः शुक्रमसौ तदेव तज्ज्योतिः शुक्रम्पश्यन्नुद्धरति रजतमन्तर्धाय प्रातरुद्धरेदेतद्रात्रिरूपम्पुरा सम्भेदाच्छायानामाहवनीयमुद्धरेन्मृत्युर्वै तमश्छाया तेनैव तज्ज्योतिषा मृत्युं तमश्छायां तरति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य गार्हपत्याहवनीयावन्तरेणानो वा रथो वा श्वा वा प्रतिपद्येत का तत्र प्रायश्चित्तिरिति नैनन्मनसि कुर्यादित्याहुरात्मन्यस्य हिता भवन्तीति तच्चेन्मनसि कुर्वीत गार्हपत्यादविछिन्नामुदकधारां हरेत्तन्तुं तन्वन्रजसो भानुमन्विहीत्याहवनीयात्सा तत्र प्रायश्चित्तिस्तदाहुः कथमग्नीनन्वादधानोऽन्वाहार्यपचनमाहारयेन्नाहारयेदिति आहारयेदित्याहुः प्राणान्वा एषोऽभ्यात्मं धत्ते योऽग्नीनाधत्ते तेषामेषोऽन्नादतमो भवति यदन्वाहार्यपचनस्तस्मिन्नेतामाहुतिं जुहोत्यग्नयेऽन्नादायान्नपतये स्वाहेत्यन्नादो हान्नपतिर्भवत्यश्नुते प्रजयान्नाद्यं य एवं वेदान्तरेण गार्हपत्याहवनीयौ होष्यन्संचरेत्तेन ह वा एनं संचरमाणमग्नयो विदुरयमस्मासु होष्यतीत्येतेन ह वा अस्य संचरमाणस्य गार्हपत्याहवनीयौ पाप्मानमपहतः सोऽपहतपाप्मोर्ध्वः स्वर्गं लोकमेतीति वै ब्राह्मणमुदाहरन्ति तदाहुः कथमग्नीन्प्रवत्स्यन्नुपतिष्ठेत प्रोष्य वा प्रत्येत्याहरहर्वेति तूष्णीमित्याहुस्तूष्णीं वै श्रेयस आकाङ्क्षन्तेऽथाप्याहुरहरहर्वा एते यजमानस्याश्रद्धयोद्वासनात्प्रप्लावनाद्बिभ्यति तानुपतिष्ठेतैवाभयं वोऽभयम्मेऽस्त्वित्यभयं हैवास्मै भवत्यभयं हैवास्मै भवति १२ २

## अध्याय ३३ खण्डः १-६

हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजापुत्र आस तस्य ह शतं जाया बभूवुस्तासु पुत्रं न लेभे तस्य ह पर्वतनारदौ गृह ऊषतुः स ह नारदम्पप्रछ यं न्विमम्पुत्रमिछन्ति ये विजानन्ति ये च न किं स्वित्पुत्रेण विन्दते तन्म आचक्ष्व नारदेति स एकया पृष्टो दशभिः प्रत्युवाच ऋनमस्मिन्संनयत्यमृतत्वं च गछति पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्यावन्तः पृथिव्याम्भोगा यावन्तो

जातवेदसि यावन्तो अप्सु प्राणिनाम्भूयान्पुत्रे पितुस्ततः शश्वत्पुत्रेण पितरोऽत्यायन्बहुलं तमः आत्मा हि जज्ञ आत्मनः स इरावत्यतितारिणी किं नु मलं किमजिनं किमु श्मश्रूणि किं तपः पुत्रम्ब्रह्माण इछध्वं स वै लोकोऽवदावदः अन्नं ह प्राणः शरणं ह वासो रूपं हिरण्यम्पशवो विवाहाः सखा ह जाया कृपणं ह दुहिता ज्योतिर्ह पुत्रः परमे व्योमन्पतिर्जायाम्प्रविशति गर्भो भूत्वा स मातरम्तस्याम्पुनर्नवो भूत्वा दशमे मासि जायते तज्जाया जाया भवति यदस्यां जायते पुनः आभूतिरेषाभूतिर्बीजमेतन्निधीयते देवाश्चैतामृषयश्च तेजः समभरन्महत्देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहति एष पन्था उरुगायः सुशेवो यम्पुत्रिण आक्रमन्ते विशोकाः तम्पश्यन्ति पशवो वयांसि च तस्मात्ते मात्रापि मिथुनीभवन्तीति हास्मा आख्याय १३

अथैनमुवाच वरुणं राजानमुपधाव पुत्रो मे जायतां तेन त्वा यजा इति तथेति स वरुणं राजानमुपससार पुत्रो मे जायतां तेन त्वा यजा इति तथेति तस्य ह पुत्रो जज्ञे रोहितो नाम तं होवाचाजनि वै ते पुत्रो यजस्व मानेनेति स होवाच यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति निर्दशो न्वस्त्वथ त्वा यजा इति तथेति स ह निर्दश आस तम्होवाच निर्दशो न्वभूद्यजस्व मानेनेति स होवाच यदा वै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति दन्ता न्वस्य जायन्तामथ त्वा यजा इति तथेति तस्य ह दन्ता जज्ञिरे तं होवाचाज्ञत वा अस्य दन्ता यजस्व मानेनेति स होवाच यदा वै पशोर्दन्ताः पद्यन्तेऽथ स मेध्यो भवति दन्ता न्वस्य पद्यन्तामथ त्वा यजा इति तथेति तस्य ह दन्ताः पेदिरे तं होवाचापत्सत वा अस्य दन्ता यजस्व मानेनेति स होवाच यदा वै पशोर्दन्ताः पुनर्जायन्तेऽथ स मेध्यो भवति दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति तथेति तस्य ह दन्ताः पुनर्जज्ञिरे तं होवाचाज्ञत वा अस्य पुनर्दन्ता यजस्व मानेनेति स होवाच यदा वै क्षत्रियः संनाहुको भवत्यथ स मेध्यो भवति संनाहं नु प्राप्नोत्वथ त्वा यजा इति तथेति स ह संनाहम्प्राप तं होवाच संनाहं नु प्रापद्यजस्व मानेनेति स तथेत्युक्त्वा पुत्रमामन्त्रयामास ततायं वै मह्यं त्वामददाद्धन्त त्वयाहमिमं यजा इति स ह नेत्युक्त्वा धनुरादायारण्यमपातस्थौ स संवत्सरमरण्ये चचार १४

अथ हैक्ष्वाकं वरुणो जग्राह तस्य होदरं जज्ञे तदु ह रोहितः शुश्राव

सोऽरण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच नाना श्रान्ताय श्रीरस्तीति रोहित शुश्रुम पापो नृषद्वरो जन इन्द्र इच्चरतः सखा चरैवेति चरैवेति वै मा ब्राह्मणोऽवोचदिति ह द्वितीयं संवत्सरमरण्ये चचार सोऽरण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताश् चरैवेति चरैवेति वै मा ब्राह्मणोऽवोचदिति ह तृतीयं संवत्सरमरण्ये चचार सोऽरण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः शेते निपद्यमानस्य चराति चरतो भगश् चरैवेति चरैवेति वै मा ब्राह्मणोऽवोचदिति ह चतुर्थं संवत्सरमरण्ये चचार सोऽरण्याद्ग्रामनेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच कलिः शयानो भवति संजिहानस्तु द्वापरः उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरंश् चरैवेति चरैवेति वै मा ब्राह्मणोऽवोचदिति ह पञ्चमं संवत्सरमरण्ये चचार सोऽरण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच चरन्वै मधु विन्दति चरन्स्वादुमुदुम्बरम्सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरंश् चरैवेति चरैवेति वै मा ब्राह्मणोऽवोचदिति ह षष्ठं संवत्सरमरण्ये चचार सोऽजीगर्तं सौयवसिमृषिमशनायापरीतमरण्य उपेयाय तस्य ह त्रयः पुत्रा आसुः शुनःपुछः शुनःशेपः शुनोलाङ्गूल इति तं होवाच ऋषेऽहं ते शतं ददाम्यहमेषामेकेनात्मानं निष्क्रीणा इति स ज्येष्ठम्पुत्रं निगृह्णान उवाच न न्विममिति नो एवेममिति कनिष्ठम्माता तौ ह मध्यमे सम्पादयां चक्रतुः शुनःशेपे तस्य ह शतं दत्त्वा स तमादाय सोऽरण्याद्ग्राममेयाय स पितरमेत्योवाच तत हन्ताहमनेनात्मानं निष्क्रीणा इति स वरुणं राजानमुपससारानेन त्वा यजा इति तथेति भूयन्वै ब्राह्मणः क्षत्रियादिति वरुण उवाच तस्मा एतं राजसूयं यज्ञक्रतुम्प्रोवाच तमेतमभिषेचनीये पुरुषम्पशुमालेभे १५

तस्य ह विश्वामित्रो होतासीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्मायास्य उद्गाता तस्मा उपाकृताय नियोक्तारं न विविदुः स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं नियोक्ष्यामीति तस्मा अपरं शतं ददुस्तं स नियुयोज तस्मा उपाकृताय नियुक्तायाप्रीताया पर्यग्निकृताय विशसितारं न विविदुः स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं विशसिष्यामीति तस्मा अपरं शतं ददुः सोऽसिं निःश्यान एयायाथ ह शुनःशेप ईक्षां चक्रे ऽमानुषमिव वै मा विशसिष्यन्ति हन्ताहं देवता उपधावानीति स प्रजापतिमेव प्रथमं देवताना-

मुपसासर कस्य नूनं कतमस्यामृतानामित्येतयर्चा तम्प्रजापतिरुवाचाग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति सोऽग्निमुपससाराग्नेर्वयम्प्रथमस्यामृतानामिति एतयर्चा तमग्निरुवाच सविता वै प्रसवानामीशे तमेवोपधावेति स सवितारमुपससाराभि त्वा देव सवितरित्येतेन तृचेन तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि तमेवोपधावेति स वरुणं राजानमुपससारात उत्तराभिरेक-त्रिंशता तं वरुण उवाचाग्निर्वै देवानाम्मुखं सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्र-क्ष्याम इति सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या तमग्निरुवाच विश्वान्नु देवान्स्तुह्यथ त्वोत्स्रक्ष्याम इति स विश्वान्देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भ-केभ्य इत्येतयर्चा तं विश्वे देवा ऊचुरिन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स इन्द्रं तुष्टाव यच्चिद्धि सत्य सोमपा इति चैतेन सूक्तेनोत्तरस्य च पञ्चदशभिस्तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ तमेतया प्रतीयाय शश्वदिन्द्र इति तमिन्द्र उवाचाश्विनौ नो स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽश्विनौ तुष्टावात उत्तरेण तृचेन तमश्विना उचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स उषसं तुष्टावात उत्तरेन तृचेन तस्य ह स्मर्च्यृच्युक्तायां वि पाशो मुमुचे कनीय ऐक्ष्वाकस्योदरम्भव-त्युत्तमस्यामेवर्च्युक्तायां वि पाशो मुमुचेऽगद ऐक्ष्वाक आस १६

तमृत्विज ऊचुस्त्वमेव नोऽस्याह्नः संस्थामधिगछेत्यथ हैतं शुनःशेपोऽञ्जःसवं ददर्श तमेताभिश्चतसृभिरभिसुषाव यच्चिद्धि त्वं गृहेगृह इत्यथैनं द्रोणकलशम-भ्यवनिनायोच्छिष्टं चम्वोर्भरेत्येतयर्चाथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवां चकाराथैनमवभृथमभ्यवनिनाय त्वं नो अग्ने वरुणस्य विद्वानित्येताभ्यामथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयां चकार शुनश्चि-च्छेपं निदितं सहस्रादित्यथ ह शुनःशेपो विश्वामित्रस्याङ्कमाससाद स होवा-चाजीगर्तः सौयवसिर्ऋषे पुनर्मे पुत्रं देहीति नेति होवाच विश्वामित्रो देवा वा इमम्मह्यमरासतेति स ह देवरातो वैश्वामित्र आस तस्यैते कापिलेयबाभ्रवाः स होवचाजीगर्तः सौयवसिस्त्वम्वेहि विह्वयावहा इति स होवाचाजीगर्तः सौय-वसिराङ्गिरसो जन्मनास्याजीगर्तिः श्रुतः कविः रिषे पैतामहात्तन्तोर्मापगाः पुन-रेहि माम् इति स होवाच शुनःशेपोऽदर्शुस्त्वा शासहस्तं न यच्छूद्रेष्वलप्सत गवां त्रीणि शतानि त्वमवृणीथा मदङ्गिर इति स होवाचाजीगर्तः सन्यव-सिस्तद्वै मा तात तपति पापं कर्म मया कृतम्तदहं निह्नवे तुभ्यम्प्रतियन्तु शता

गवाम् इति स होवाच शुनःशेपोयः सकृत्पापकं कुर्यात्कुर्यादेनत्ततोऽप-रम्नापागाः शौद्रान्नयायादसंधेयं त्वया कृतम् इत्यसंधेयमिति ह विश्वामित्र उपपपाद स होवाच विश्वामित्रो भीम एव सौयवसिः शासेन विशिशासिषुः अस्थान्मैतस्य पुत्रो भूर्ममैवोपेहि पुत्रताम् इति स होवाच शुनःशेपः स वै यथा नो ज्ञपया राजपुत्र तथा वद यथैवाङ्गिरसः सन्नुपेयां तव पुत्रताम् इति स होवाच विश्वामित्रो ज्येष्ठो मे त्वम्पुत्राणां स्यास्तव श्रेष्ठा प्रजा स्यातुपेया दैवम्मे दायं तेन वै त्वोपमन्त्रय इति स होवाच शुनःशेपः संजानानेषु वै ब्रूयाः सौहर्द्याय मे श्रियै यथाहम्भरतऋृषभोपेयां तव पुत्रताम् इत्यथ ह विश्वामित्रः पुत्राना-मन्त्रयामास मधुछन्दाः शृणोतन ऋृषभो रेणुरष्टकः ये केच भ्रातरः स्थनास्मै ज्यैष्ठ्याय कल्पध्वमिति १७

तस्य ह विश्वामित्रस्यैकशतम्पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुछन्दसः पञ्चाशत्कनीयांसस्तद्ये ज्यायांसो न ते कुशलम्मेनिरेताननुव्याजहारान्तावः प्रजा भक्षीष्टेति त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनाम्भूयिष्ठाः स होवाच मधुछन्दाः पञ्चाशता सार्धं यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम्पुरस्त्वा सर्वे कुर्महे त्वामन्वञ्चो वयं स्मसीत्यथ ह विश्वामित्रः प्रतीतः पुत्रांस्तुष्टाव ते वै पुत्राः पशुमन्तो वीरवन्तो भविष्यथ ये मानम्मेऽनुगृह्णन्तो वीरवन्तमकर्त मा पुरएत्रा वीरवन्तो देवरातेन गाथिनाः सर्वे राध्याः स्थ पुत्रा एष वः सद्विवाचनमेष वः कुशिका वीरो देवरातस्तमन्वित युष्मांश्च दायम्म उपेता विद्यां यामु च विद्मसि ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः देवराताय तस्थिरे धृत्यै श्रैष्ठ्याय गाथिनाः अधीयत देवरातो रिक्थयोरुभयोर्ऋृषिः जह्नूनां चाधिपत्ये दैवे वेदे च गाथिनाम् तदेतत्परऋृक्शतगाथं शौनःशेपमाख्यानं तद्धोता राज्ञेऽभिषिक्तायाचष्टे हिर-ण्यकशिपावासीन आचष्टे हिरण्यकशिपावासीनः प्रतिगृणाति यशो वै हिरण्यं यशसैवैनं तत्समर्धयत्योमित्यृचः प्रतिगर एवं तथेति गाथाया ओमिति वै दैवं तथेति मानुषं दैवेन चैवैनं तन्मानुषेण च पापादेनसः प्रमुञ्चति तस्माद्यो राजाऽविजिती स्यादप्ययजमान आख्यापयेतैवैतच्छौनःशेपमाख्यानं न हास्मिन्नल्पं चनैनः परिशिष्यते सहस्रमाख्यात्रे दद्याच्छतम्प्रतिगरित्र एते चैवासने श्वेतश्चाश्वतरीरथो होतुः पुत्रकामा हाप्याख्यापयेरँल्लभन्ते ह पुत्राँल्लभन्ते ह पुत्रान् १८ ३

अध्याय ३४ खराडः १-८

प्रजापतिर्यज्ञमसृजत यज्ञं सृष्टमनु ब्रह्मक्षत्रे असृज्येताम्ब्रह्मक्षत्रे अनु द्वय्यः प्रजा असृज्यन्त हुतादश्चाहुतादश्च ब्रह्मैवानु हुतादः क्षत्रमन्वहुताद एता वै प्रजा हुतादो यद्ब्राह्मणा अथैता अहुतादो यद्राजन्यो वैश्यः शूद्रस्ताभ्यो यज्ञ उदक्रामत्तम्ब्रह्मक्षत्रे अन्वैतां यान्येव ब्रह्मण आयुधानि तैर्ब्रह्मान्वैद्यानि क्षत्रस्य तैः क्षत्रमेतानि वै ब्रह्मण आयुधानि यद्यज्ञायुधान्यथैतानि क्षत्रस्यायुधानि यदश्वरथः कवच इषुधन्व तं क्षत्रमनन्वाप्य न्यवर्ततायुधेभ्यो ह स्मास्य विजमानः पराङेवैत्यथैनम्ब्रह्मान्वैत्तमाप्नोत्तमाप्त्वा परस्तान्निरुध्यातिष्ठत्स आप्तः परस्तान्निरुद्धस्तिष्ठञ्ज्ञात्वा स्वान्यायुधानि ब्रह्मोपावर्तत तस्माद्धाप्येतर्हि यज्ञो ब्रह्मरायेव ब्राह्मणेषु प्रतिष्ठितोऽथैनत्क्षत्रमन्वागछत्तदब्रवीदुप मास्मिन्यज्ञे ह्वयस्वेति तत्तथेत्यब्रवीत्तद्वै निधाय स्वान्यायुधानि ब्रह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तस्वेति तथेति तत्क्षत्रं निधाय स्वान्यायुधानि ब्रह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तत तस्माद्धाप्येतर्हि क्षत्रियो यजमानो निधायैव स्वान्यायुधानि ब्रह्मण एवायुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तते १९

अथातो देवयजनस्यैव याच्ञ्यश्तदाहुर्यद्ब्राह्मणो राजन्यो वैश्यो दीक्षिष्यमाणं क्षत्रियं देवयजनं याचति कं क्षत्रियो याचेदिति दैवं क्षत्रं याचेदित्याहुरादित्यो वै दैवं क्षत्रमादित्य एषाम्भूतानामधिपतिः स यदहर्दीक्षिष्यमाणो भवति तदहः पूर्वाह्ण एवोद्यन्तमादित्यमुपतिष्ठेतेदम्श्रेष्ठं ज्योतिषां ज्योतिरुत्तमम् देव सवितर्देवयजनम्मे देहि देवयजनं इति देवयजनं याचति स यत्तत्र याचित उत्तरां सर्पत्यों तथा ददामीति हैव तदाह तस्य ह न का चन रिष्टिर्भवति देवेन सवित्रा प्रसूतस्योत्तरोत्तरिणीम्ह श्रियमश्नुतेऽश्नुते ह प्रजानामैश्वर्यमाधिपत्यं य एवमुपस्थाय याचित्वा देवयजनमध्यवसाय दीक्षते क्षत्रियः सन् २०

अथात इष्टापूर्तस्यापरिज्यानिः क्षत्रियस्य यजमानस्य स पुरस्ताद्दीक्षाया आहुतिं जुहुयाच्चतुर्गृहीतमाज्यमाहवनीय इष्टापूर्तस्यापरिज्यान्यै पुनर्न इन्द्रो मघवा ददातु ब्रह्म पुनरिष्टम्पूर्तं दात्स्वाहेत्यथानूबन्ध्यायै समिष्टयजुषामुपरिष्टात्पुनर्नो अग्निर्जातवेदा ददातु क्षत्रम्पुनरिष्टम्पूर्तं दात्स्वाहेति सैषेष्टापूर्तस्यापरिज्यानिः क्षत्रियस्य यजमानस्य यदेते आहुती तस्मादेते होतव्ये २१

तदु ह स्माह सौजात आराळ्हिरजीतपुनर्वरण्यं वा एतद्यदेते आहुती इति यथा ह कामयेत तथैते कुर्याद्य इतोऽनुशासनं कुर्यादितीमे त्वेव जुहुयाद्ब्रह्म प्रपद्ये ब्रह्म मा क्षत्राद्गोपायतु ब्रह्मणे स्वाहेति तत्तदितीँ ब्रह्म वा एष प्रपद्यते यो यज्ञम्प्रपद्यते ब्रह्म वै यज्ञो यज्ञादु ह वा एष पुनर्जायते यो दीक्षते तम्ब्रह्म प्रपन्नं क्षत्रं न परिजिनाति ब्रह्म मा क्षत्राद्गोपायत्वित्याह यथैनम्ब्रह्म क्षत्राद्गोपायेद्ब्रह्मणे स्वाहेति तदेनत्प्रीणाति तदेनत्प्रीतं क्षत्राद्गोपायत्यथानूबन्ध्यायै समिष्टयजुषामुपरिष्टात्क्षत्रम्प्रपद्ये क्षत्रम्मा ब्रह्मणो गोपायतु क्षत्राय स्वाहेति तत्तदितीँ क्षत्रं वा एष प्रपद्यते यो राष्ट्रम्प्रपद्यते क्षत्रं हि राष्ट्रं तं क्षत्रम्प्रपन्नम्ब्रह्म न परिजिनाति क्षत्रम्मा ब्रह्मणो गोपायत्वित्याह यथैनं क्षत्रम्ब्रह्मणो गोपायेत्क्षत्राय स्वाहेति तदेनत्प्रीणाति तदेनत्प्रीतम्ब्रह्मणो गोपायति सैषेष्टापूर्तस्यैवापरिज्यानिः क्षत्रियस्य यजमानस्य यदेते आहुती तस्मादेते एव होतव्ये २२

अथैन्द्रो वै देवतया क्षत्रियो भवति त्रैष्टुभश्छन्दसा पञ्चदशः स्तोमेन सोमो राज्येन राजन्यो बन्धुना स ह दीक्षमाण एव ब्राह्मणतामभ्युपैति यत्कृष्णाजिनमध्यूहति यद्दीक्षितव्रतं चरति यदेनम्ब्राह्मणा अभिसंगछन्ते तस्य ह दीक्षमाणस्येन्द्र एवेन्द्रियमादत्ते त्रिष्टुब्वीर्यम्पञ्चदशः स्तोम आयुः सोमो राज्यम्पितरो यशस्कीर्तिमन्यो वा अयमस्मद्भवति ब्रह्म वा अयम्भवति ब्रह्म वा अयमुपावर्तत इति वदन्तः स पुरस्ताद्दीक्षाया आहुतिं हुत्वाहवनीयमुपतिष्ठेत नेन्द्राद्देवताया एमि न त्रिष्टुभश्छन्दसो न पञ्चदशत्स्तोमान्न सोमाद्राज्ञो न पित्र्याद्बन्धोर्मा म इन्द्र इन्द्रियमादित मा त्रिष्टुब्वीर्यम्मा पञ्चदशः स्तोम आयुर्मा सोमो राज्यम्मा पितरो यशस्कीर्तिं सहेन्द्रियेण वीर्येणायुषा राज्येन यशसा बन्धुनाग्निमुपैमि गायत्रीं छन्दस्त्रिवृतं स्तोमं सोमं राजानम्ब्रह्म प्रपद्ये ब्राह्मणो भवामीति तस्य ह नेन्द्र इन्द्रियमादत्ते न त्रिष्टुब्वीर्यं न पञ्चदशः स्तोम आयुर्न सोमो राज्यं न पितरो यशस्कीर्तिं य एवमेतामाहुतिं हुत्वाहवनीयमुपस्थाया दीक्षते क्षत्रियः सन् २३

अथाग्नेयो वै देवतया क्षत्रियो दीक्षितो भवति गायत्रश्छन्दसा त्रिवृत्स्तोमेन ब्राह्मणो बन्धुना स होदवस्यन्नेव क्षत्रियतामभ्युपैति तस्य होदवस्यतोऽग्निरेव तेज आदत्ते गायत्री वीर्यं त्रिवृत्स्तोम आयुर्ब्राह्मणा ब्रह्म यशस्कीर्तिमन्यो वा

अयमस्मद्भवति क्षत्रं वा अयम्भवति क्षत्रं वा अयमुपावर्तत इति वदन्तः सोऽनूबन्ध्यायै समिष्टयजुषामुपरिष्टाद्धुत्वाहुतिमाहवनीयमुपतिष्ठेत नाग्नेर्देवताया एमि न गायत्र्याश्छन्दसो न त्रिवृतः स्तोमान्न ब्रह्मणो बन्धोर्मा मेऽग्निस्तेज आदित मा गायत्री वीर्यम्मा त्रिवृत्स्तोम आयुर्मा ब्राह्मणा ब्रह्म यशस्कीर्तिं सह तेजसा वीर्येणायुषा ब्रह्मणा यशसा कीर्त्येन्द्रं देवतामुपैमि त्रिष्टुभं छन्दः पञ्चदशं स्तोमं सोमं राजानं क्षत्रम्प्रपद्ये क्षत्रियो भवामि देवाः पितरः पितरो देवा योऽस्मि स सन्यजे स्वम्म इदमिष्टं स्वम्पूर्तं स्वं श्रान्तं स्वं हुतम्तस्य मेऽयमग्निरुपद्रष्टायं वायुरुपश्रोतासावादित्योऽनुख्यातेदमहं य एवास्मि सोऽस्मीति तस्य ह नाग्निस्तेज आदत्ते न गायत्री वीर्यं न त्रिवृत्स्तोम आयुर्न ब्राह्मणा ब्रह्म यशस्कीर्तिं य एवमेतामाहुतिं हुत्वाहवनीयमुपस्थायोदवस्यति क्षत्रियः सन् २४

अथातो दीक्षाया आवेदनस्यैव तदाहुर्यद्ब्राह्मणस्य दीक्षितस्य ब्राह्मणोऽदीक्षिष्टेति दीक्षामावेदयन्ति कथं क्षत्रियस्यावेदयेदिति यथैवैतद्ब्राह्मणस्य दीक्षितस्य ब्राह्मणोऽदीक्षिष्टेति दीक्षामवेदयन्त्येवमेवैतत्क्षत्रियस्यावेदयेत्पुरोहितस्यार्षेयेणेति तत्तदितीँ निधाय वा एष स्वान्यायुधानि ब्रह्माण एवायुधैर्ब्रह्मणो रूपेणा ब्रह्म भूत्वा यज्ञमुपावर्तत तस्मात्तस्य पुरोहितस्यार्षेयेण दीक्षामावेदयेयुः पुरोहितस्यार्षेयेण प्रवरम्प्रवृणीरन् २५

अथातो यजमानभागस्यैव तदाहुः प्राश्नीयात्क्षत्रियो यजमानभागां न प्राश्नीयादिति यत्प्राश्नीयादहुताद्धुतम्प्राश्य पापीयान्स्याद्यन्न प्राश्नीयाद्यज्ञादात्मानमन्तरियाद्यज्ञो वै यजमानभागः स ब्रह्मणे परिहृत्यः पुरोहितायतनं वा एतत्क्षत्रियस्य यद्ब्रह्मार्धात्मो ह वा एष क्षत्रियस्य यत्पुरोहित उपाह परोक्षेणैव प्राशितरूपमाप्नोति नास्य प्रत्यक्षम्भक्षितो भवति यज्ञ उ ह वा एष प्रत्यक्षं यद्ब्रह्मा ब्रह्मणि हि सर्वो यज्ञः प्रतिष्ठितो यज्ञे यजमानो यज्ञ एव तद्यज्ञमप्यत्यर्जन्ति यथाप्स्वापो यथाग्नावग्निं तद्वै नातिरिच्यते तदेनं न हिनस्ति तस्मात्स ब्रह्मणे परिहृत्योऽग्नौ हैके जुह्वति प्रजापतेर्विभान्नाम लोकस्तस्मिंस्त्वा दधामि सह यजमानेन स्वाहेति तत्तथा न कुर्याद्यजमानो वै यजमानभागो यजमानं ह सोऽग्नौ प्रवृणक्ति य एनं तत्र ब्रूयाद्यजमानमग्नौ प्रावार्क्षीः प्रास्याग्निः प्राणान्धक्ष्यति मरिष्यति यजमान इति शश्वत्तथा स्यात्तस्मात्तस्याशां नेयादाशां

नेयात् २६ ४

अध्याय ३५ खण्डः १-८

विश्वंतरो ह सौषद्मनः श्यापर्णान्परिचक्षाणो विश्यापर्णं यज्ञमाजह्रे तद्धानुबुध्य श्यापर्णास्तं यज्ञमाजग्मुस्ते ह तदन्तर्वेद्यासां चक्रिरे तान्ह दृष्ट्वोवाच पापस्य वा इमे कर्मणः कर्तार आसतेऽपूतायै वाचो वदितारो यच्छ्यापर्णा इमानुत्थापयतेमे मेऽन्तर्वेदि मासिषतेति तथेति तानुत्थापयां चक्रुस्ते होत्थाप्यमाना रुरुविरे ये तेभ्यो भूतवीरेभ्योऽसितमृगाः कश्यपानां सोमपीथमभिजिग्युः पारिक्षितस्य जनमेजयस्य विकश्यपे यज्ञे तैस्ते तत्र वीरवन्त आसुः कः स्वित्सोऽस्मा-कोऽस्ति वीरो य इमं सोमपीथमभिजेष्यतीत्ययमहमस्मि वो वीर इति होवाच रामो मार्गवेयो रामो हास मार्गवेयोऽनूचानः श्यापर्णीयस्तेषां होत्ति-ष्ठतामुवाचापि नु राजन्नित्थंविदं वेदेरुत्थापयन्तीति यस्त्वं कथं वेत्थ ब्रह्मबन्धविति २७

यत्रेन्द्रं देवताः पर्यवृञ्जन्विश्वरूपं त्वाष्ट्रमभ्यमंस्त वृत्रमस्तृत यतीन्सालावृकेभ्यः प्रादादरुरुमघानवधीद्बृहस्पतेः प्रत्यवधीदिति तत्रेन्द्रः सोमपीथेन व्याध्यर्ते-न्द्रस्यानु व्यृद्धिं क्षत्रं सोमपीथेन व्याध्यर्तापीन्द्रः सोमपीथेऽभवत्त्वष्टुरामुष्य सोमं तद्व्यृद्धमेवाद्यापि क्षत्रं सोमपीथेन स यस्तम्भक्षं विद्याद्यः क्षत्रस्य सोमपिथेन व्यृइद्धस्य येन क्षत्रं समृध्यते कथं तं वेदेरुत्थापयन्तीति वेत्थ ब्राह्मण त्वं तम्भक्षाम् वेद हीति तं वै नो ब्राह्मण ब्रूहीति तस्मै वै ते राजन्निति होवाच २८

त्रयाणाम्भक्षाणामेकमाहरिष्यन्ति सोमं वा दधि वापो वा स यदि सोम-म्ब्राह्मणानां स भक्षो ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि ब्राह्मणकल्पस्ते प्रजायामाजनिष्यत आदाय्यापाय्यावसायी यथाकामप्रयाप्यो यदा वै क्षत्रियाय पापम्भवति ब्राह्मणकल्पोऽस्य प्रजायामाजायत ईश्वरो हास्माद्द्वितीयो वा तृतीयो वा ब्राह्मणतामभ्युपैतोः स ब्रह्मबन्धवेन जिज्यूषितोऽथ यदि दधि वैश्यानां स भक्षो वैश्यांस्तेन भक्षेण जिन्विष्यसि वैश्यकल्पस्ते प्रजायामा-जनिष्यतेऽन्यस्य बलिकृदन्यस्याद्यो यथाकामज्येयो यदा वै क्षत्रियाय पाप-म्भवति वैश्यकल्पोऽस्य प्रजायामाजायत ईश्वरो हास्माद्द्वितीयो वा तृतीयो वा

वैश्यतामभ्युपैतोः स वैश्यतया जिज्यूषितोऽथ यद्यपः शूद्राणां स भक्षः शूद्रांस्तेन भक्षेण जिन्विष्यसि शूद्रकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यो यदा वै क्षत्रियाय पापम्भवति शूद्रकल्पोऽस्य प्रजायामाजायत ईश्वरो हास्माद्द्वितीयो वा तृतीयो वा शूद्रतामभ्युपैतोः स शूद्रतया जिज्यूषितः २९

एते वै ते त्रयो भक्षा राजन्निति होवाच येषामाशां नेयात्क्षत्रियो यजमानोऽथास्यैष स्वो भक्षो न्यग्रोधस्यावरोधाश्च फलानि चौदुम्बराण्याश्वत्थानि प्लाक्षाण्यभिषुणुयात्तानि भक्षयेत्सोऽस्य स्वो भक्षो यतो वा अधि देवा यज्ञेनेष्ट्वा स्वर्गं लोकमायंस्तत्रैतांश्चमसान्नयुब्जंस्ते न्यग्रोधा अभवन्नयुब्जा इति हाप्येनानेतर्ह्याचक्षते कुरुक्षेत्रे ते ह प्रथमजा न्यग्रोधानां तेभ्यो हान्येऽधिजातास्ते यन्नयञ्चोऽरोहंस्तस्मान्नयङ्रोहति न्यग्रोहो न्यग्रोहो वै नाम तं न्यग्रोहं सन्तं न्यग्रोध इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः ३०

तेषां यश्चमसानां रसोऽवाङैत्तेऽवरोधा अभवन्नथ य ऊर्ध्वस्तानि फलान्येष ह वाव क्षत्रियः स्वाद्भक्षान्नैति यो न्यग्रोधस्यावरोधांश्च फलानि च भक्षयत्युपाह परोक्षेणैव सोमपीथमाप्नोति नास्य प्रत्यक्षम्भक्षितो भवति परोक्षमिव ह वा एष सोमो राजा यन्नयग्रोधः परोक्षमिवैष ब्रह्मणो रूपमुपनिगछति यत्क्षत्रियः पुरोधयैव दीक्षयैव प्रवरेणैव क्षत्रं वा एतद्वनस्पतीनां यन्नयग्रोधः क्षत्रं राजन्यो नितत इव हीह क्षत्रियो राष्ट्रे वसन्भवति प्रतिष्ठित इव नितत इव न्यग्रोधोऽवरोधैर्भूम्याम्प्रतिष्ठित इव तद्यत्क्षत्रियो यजमानो न्यग्रोधस्यावरोधांश्च फलानि च भक्षयत्यात्मन्येव तत्क्षत्रं वनस्पतीनाम्प्रतिष्ठापयति क्षत्र आत्मानं क्षत्र ह वै स आत्मनि क्षत्रं वनस्पतीनाम्प्रतिष्ठापयति न्यग्रोध इवावरोधैर्भूम्याम्प्रति राष्ट्रे तिष्ठत्युग्रं हास्य राष्ट्रमव्यथ्यम्भवति य एवमेतम्भक्षम्भक्षयति क्षत्रियो यजमानः ३१

अथ यदौदुम्बराण्यूर्जो वा एषोऽन्नाद्याद्वनस्पतिरजायत यदुदुम्बरो भौज्यं वा एतद्वनस्पतीनामूर्जमेवास्मिंस्तदन्नाद्यं च भौज्यं च वनस्पतीनां क्षत्रे दधात्यथ यदाश्वत्थानि तेजसो वा एष वनस्पतिरजायत यदश्वत्थः साम्राज्यं वा एतद्वनस्पतीनाम्तेज एवास्मिंस्तत्साम्राज्यं च वनस्पतीनां क्षत्रे दधात्यथ

यत्प्लाक्षाणि यशसो वा एष वनस्पतिरजायत यत्प्लक्षः स्वाराज्यं च ह वा एतद्वैराज्यं च वनस्पतीनां यश एवास्मिंस्तत्स्वाराज्यवैराज्ये च वनस्पतीनां क्षत्रे दधात्येतान्यस्य पुरस्तादुपक्लृप्तानि भवन्त्यथ सोमं राजानं क्रीनन्ति ते राज्ञ एवावृतोपवसथात्प्रतिवेशैश्चरन्त्यथौपवसथ्यमहरेतान्यध्वर्युः पुरस्तादुपकल्पयेताधिषवणं चर्माधिषवणे फलके द्रोणकलशं दशापवित्रमद्रीन्पूतभृतं चाधवनीयं च स्थालीमुदञ्चनं चमसं च तद्यदेतद्राजनम्प्रातरभिषुणवन्ति तदेनानि द्वेधा विगृह्णीयादभ्यन्यानि सुनुयान्माध्यंदिनायान्यानि परिशिंष्यात् ३२

तद्यत्रैतांश्चमसानुन्नयेयुस्तदेतं यजमानचमसमुन्नयेत्तस्मिन्द्वे दर्भतरुणके प्रास्ते स्यातां तयोर्वषट्कृतेऽन्तःपरिधि पूर्वम्प्रास्येद्दधिक्राव्णो अकारिषं इत्येतयर्चा सस्वाहकारयानुवषट्कृतेऽपरमा दधिक्राः शवसा पञ्च कृष्टीरिति तद्यत्रैतांश्चमसानाहरेयुस्तदेतं यजमानचमसमाहरेत्तान्यत्रोद्गृह्णीयुस्तदेनमुपोद्गृह्णीयात्तद्यदेळां होतोपह्वयेत यदा चमसम्भक्षयेदथैनमेतया भक्षयेद्यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामीति शिवो ह वा अस्मा एष वानस्पत्यः शिवेन मनसा भक्षितो भवत्युग्रं हास्य राष्ट्रमव्यथ्यम्भवति य एवमेतम्भक्षम्भक्षयति क्षत्रियो यजमानः शं ना एधि हृइदे पीतः पीतः प्र ण आयुर्जीवसे सोम तारीरित्यात्मनः प्रत्यभिमर्श ईश्वरो ह वा एषोऽप्रत्यभिमृष्टो मनुष्यस्यायुः प्रत्यवहर्तोरनर्हन्मा भक्षयतीति तद्यदेतेनात्मानमभिमृशत्यायुरेव तत्प्रतिरत आ प्यायस्व समेतु ते सं ते पयांसि समु यन्तु वाजा इति चमसमाप्याययत्यभिरूपाभ्यां यद्यज्ञेऽभिरूपं तत्समृद्धम् ३३

तद्यत्रैतांश्चमसान्सादयेयुस्तदेतं यजमानचमसं सादयेत्तान्यत्र प्रकम्पयेयुस्तदेनमनुप्रकम्पयेदथैनमाहृतम्भक्षयेन्नराशंसपीतस्य देव सोम ते मतिविद ऊमैः पितृभिर्भक्षितस्य भक्षयामीति प्रातःसवने नाराशंसो भक्ष ऊर्वैरिति माध्यंदिने काव्यैरिति तृतीयसवन ऊमा वै पितरः प्रातःसवन ऊर्वा माध्यंदिने काव्यास्तृतीयसवाने तदेतत्पितृनेवामृतान्सवनभाजः करोति सर्वो हैव सोऽमृत इति ह स्माह प्रियव्रतः सोमापो यः कश्च सवनभागित्यमृता ह वा अस्य पितरः सवनभाजो भवन्त्युग्रं हास्य राष्ट्रमव्यथ्यम्भवति य एवमेतम्भक्षम्भक्षयति

क्षत्रियो यजमानः समान आत्मनः प्रत्यभिमर्शः समानमाप्यायनं चमसस्य प्रातःसवनस्यैवावृता प्रातःसवने चरेयुर्माध्यंदिनस्य माध्यंदिने तृतीयसवनस्य तृतीयसवने तमेवमेतम्भक्षम्प्रोवाच रामो मार्गवेयो विश्वंतराय सौषद्मनाय तस्मिन्होवाच प्रोक्ते सहस्रमु ह ब्राह्मण तुभ्यं दद्मः सश्यापर्ण उ मे यज्ञ इत्येतमु हैव प्रोवाच तुरः कावषेयो जनमेजयाय पारिक्षितायैतमु हैव प्रोचतुः पर्वतनारदौ सोमकाय साहदेव्याय सहदेवाय सार्ञ्जयाय बभ्रवे दैवावृधाय भिमाय वैदर्भाय नग्नजिते गान्धारायैतमु हैव प्रोवाचाग्निः सनश्रुतायारिम्दमाय क्रतुविदे जानकय एतमु हैव प्रोवाच वसिष्ठः सुदासे पैजवनाय ते ह ते सर्व एव महज्जग्मुरेतम्भक्षम्भक्षयित्वा सर्वे हैव महाराजा आसुरादित्य इव ह स्म श्रियाम्प्रतिष्ठितास्तपन्ति सर्वाभ्यो दिग्भ्यो बलिमावहन्त आदित्य इव ह वै श्रियाम्प्रतिष्ठितस्तपति सर्वाभ्यो दिग्भ्यो बलिमावहत्युग्रं हास्य राष्ट्रमव्यथ्यम्भवति य एवमेतम्भक्षम्भक्षयति क्षत्रियो यजमानो यजमानः ३४ ५

इति सप्तमपञ्चिका समाप्ता

## पञ्चिका ८

### अध्याय ३६ खण्डः १-४

अथातः स्तुतशस्त्रयोरेवैकाहिकम्प्रातःसवनमैकाहिकं तृतीयसवनमेते वै शान्ते क्लृप्ते प्रतिष्ठिते सवने यदैकाहिके शान्त्यै क्लृप्त्यै प्रतिष्ठित्या अप्रच्युत्या उक्तो माध्यंदिनः पवमानो य उभयसाम्नो बृथत्पृष्ठस्योभे हि सामनी क्रियेते आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति राथंतरी प्रतिपद्राथंतरोऽनुचरः पवमानोक्थं वा एतद्यन्मरुत्वतीयम्पवमाने वा अत्र रथंतरं कुर्वन्ति बृहत्पृष्ठं सवीवधतायै तदिदं रथंतरं स्तुतमाभ्याम्प्रतिपदनुचराभ्यामनुशंसत्यथो ब्रह्म वै रथंतरं क्षत्रं बृहद्ब्रह्म खलु वै क्षत्रात्पूर्वम्ब्रह्मपुरस्तान्म उग्रं राष्ट्रमव्यथ्यमसदित्यथान्नं वै रथंतरमन्नमेवास्मै तत्पुरस्तात्कल्पयत्यथेयं वै पृथिवी रथंतरमियं खलु वै प्रतिष्ठ प्रतिष्ठामेवास्मै तत्पुरस्तात्कल्पयति समान इन्द्रनिहवोऽविभक्तः सोऽह्नामुद्वान्ब्राह्मणस्पत्य उभयसाम्नो रूपमुभे हि सामनी क्रियेते समान्यो धाय्य अविभक्तास्ता अह्नामैकाहिको मरुत्वतीयः प्रगाथः १

जनिष्ठा उग्रः सहसे तुरायेति सूक्तमुग्रवत्सहस्वत्तत्क्षत्रस्य रूपमन्द्र ओजिष्ठ

इत्योजस्वत्तत्क्षत्रस्य रूपम्बहुलाभिमान इत्यभिवदभिभूत्यै रूपं तदेकादश-र्चम्भवत्येकादशाक्षरा वै त्रिष्टुप् त्रैष्टुबो वै राजन्य ओजो वा इन्द्रियं वीर्यं त्रिष्टुबोजः क्षत्रं वीर्यं राजन्यस्तदेनमोजसा क्षत्रेण वीर्येण समर्धयति तद्गौरि-वीतम्भवत्येतद्वै मरुत्वतीयं समृद्धं यद्गौरिवीतं तस्योक्तम्ब्राह्मणं त्वामिद्धि हवामह इति बृहत्पृष्ठम्भवति क्षत्रं वै बृहत्क्षत्रेणैव तत्क्षत्रं समर्धयत्यथो क्षत्रं वै बृहदात्मा याजमानस्य निष्केवल्यं तद्यद्बृहत्पृष्ठम्भवति क्षत्रं वै बृहत्क्षत्रेणैवैनं तत्समर्धयत्यथो ज्यैष्ठ्यं वै बृहज्ज्यैष्ठ्येनैवैनं तत्समर्धयत्यथो श्रैष्ठ्यं वै बृहच्छ्रै-ष्ठ्येनैवैनं तत्समर्धयत्यभि त्वा शूर नोनुम इति रथंतरमनुरूपं कुर्वन्त्ययं वै लोको रथंतरमसौ लोको बृहदस्य वै लोकस्यासौ लोकोऽनुरूपोऽमुष्य लो-कस्यायं लोकोऽनुरूपस्तद्यद्रथंतरमनुरूपं कुर्वन्त्युभावेव तल्लोकौ यजमानाय सम्भोगिनौ कुर्वन्त्यथो ब्रह्म वै रथंतरं क्षत्रम्बृहद्ब्रह्मणि खलु वै क्षत्रम्प्रतिष्ठितं क्षत्रे ब्रह्माथो साम्न एव सयोनितायै यद्वावानेति धाय्या तस्या उक्तम्ब्राह्मणमुभयं शृणवच्च न इति सामप्रगाथ उभयसाम्नो रूपमुभे हि सामनी क्रियेते २

तमु ष्टुहि यो अभिभूत्योजा इति सूक्तमभिवदभिभूत्यै रूपमषाळ्हमुग्रं सहमानमाभिरित्युग्रवत्सहमानवत्तत्क्षत्रस्य रूपं तत्पञ्चदशर्चम्भवत्योजो वा इन्द्रियं वीर्यम्पञ्चदश ओजः क्षत्रं वीर्यम्राजन्यस्तदेनमोजसा क्षत्रेण वीर्येण समर्धयति तद्भारद्वाजम्भवति भारद्वाजं वै बृहदार्षेयेण सलोमैष ह वाव क्षत्रिययज्ञः समृद्धो यो बृहत्पृष्ठस्तस्माद्यत्र क्वच क्षत्रियो यजेत बृहदेव तत्र पृष्ठं स्यात्तत्समृद्धम् ३

ऐकाहिका होत्रा एता वै शान्ताः क्लृप्ताः प्रतिष्ठिता होत्रा यदैकाहिकाः शान्त्यै क्लृप्त्यै प्रतिष्ठित्या अप्रच्युत्यै ताः सर्वरूपा भवन्ति सर्वसमृद्धाः सर्वरूपतायै सर्वसमृद्ध्यै सर्वरूपाभिर्होत्राभिः सर्वसमृद्धाभिः सर्वान्कामानवाप्नवामेति तस्माद्यत्र क्वचैकाहा असर्वस्तोमा असर्वपृष्ठा ऐकाहिका एव तत्र होत्राः स्युस्तत्समृद्धमुक्थ्य एवायम्पञ्चदशः स्यादित्याहुरोजो वा इन्द्रियं वीर्यम्पञ्चदश ओजः क्षत्रं वीर्यं राजन्यस्तदेनमोजसा क्षत्रेण वीर्येण समर्धयति तस्य त्रिंशत्स्तुतशस्त्राणि भवन्ति त्रिंशदक्षरा वै विराड्विराडन्नाद्यं विराज्येवैनं तदन्नाद्ये प्रतिष्ठापयति तस्मात्तदुक्थ्यः पञ्चदशः स्यादित्याहुर्ज्योतिष्टोम एवा-ग्निष्टोमः स्याद्ब्रह्म वै स्तोमानां त्रिवृत्क्षत्रम्पञ्चदशो ब्रह्म खलु वै क्षत्रा-

त्पूर्वम्ब्रह्मपुरस्तान्न उग्रं राष्ट्रमव्यथ्यमसदिति विशः सप्तदशः शौद्रो वर्ण एकविंशो विशं चैवास्मै तच्छौद्रं च वर्णमनुवर्त्मानौ कुर्वन्त्यथो तेजो वै स्तोमानां त्रिवृद्वीर्यम्पञ्चदशः प्रजातिः सप्तदशः प्रतिष्ठैकविंशस्तदेनं तेजसा वी-र्येण प्रजात्या प्रतिष्ठयान्ततः समर्धयति तस्माज्ज्योतिष्टोमः स्यात्तस्य चतुर्विं-शतिः स्तुतशस्त्राणि भवन्ति चतुर्विंसत्यर्धमासो वै संवत्सरः संवत्सरे कृत्स्न-मन्नाद्यं कृत्स्न एवैनं तदन्नाद्ये प्रतिष्ठापयति तस्माज्ज्योतिष्टोम एवाग्निष्टोमः स्यादग्निष्टोमः स्यात् ४ १

## अध्याय ३७ खण्डः १-७

अथातः पुनरभिषेकस्यैव सूयते ह वा अस्य क्षत्रं यो दीक्षते क्षत्रियः सन्स यदा-वभृतादुदेत्यानूबन्ध्ययेष्ट्वोदवस्यत्यथैनमुदवसानीयायां संस्थितायाम्पुनरभि-षिञ्चन्ति तस्यैते पुरस्तादेव सम्भारा उपक्लृप्ता भवन्त्यौदुम्बर्यासन्दी तस्यै प्रा-देशमात्राः पादाः स्युररत्निमात्राणि शीर्षण्यानूच्यानि मौञ्जं विवयनं व्याघ्रच-र्मास्तरणमौदुम्बरश्चमस उदुम्बरशाखा तस्मिन्नेतस्मिंश्चमसेऽष्टातयानि निषुतानि भवन्ति दधि मधु सर्पिरातपवर्ष्या आपः शष्पाणि च तोक्मानि च सुरा दूर्वा तद्यैषा दक्षिणा स्फ्यवर्तनिर्वेदेर्भवति तत्रैताम्प्राचीमासन्दीम्प्रतिष्ठापयति तस्या अन्तर्वेदि द्वौ पादौ भवतो बहिर्वेदि द्वावियं वै श्रीस्तस्या एतत्परिमितं रूपं यदन्तर्वेद्यथैष भूमापरिमितो यो बहिर्वेदि तद्यदस्या अन्तर्वेदि द्वौ पादौ भवतो बहिर्वेदि द्वा उभयोः कामयोरुपाप्त्यै यश्चान्तर्वेदि यश्च बहिर्वेदि ५

व्याघ्रचर्मणास्तृणात्युत्तरलोम्ना प्राचीनग्रीवेण क्षत्रां वा एतदारण्यानाम्पशूनां यद्व्याघ्रः क्षत्रं राजन्यः क्षत्रेणैव तत्क्षत्रं समर्धयति ताम्पश्चात्प्राङुपविश्याच्य जान्नदक्षिणमभिमन्त्रयत उभाभ्याम्पाणिभ्यामालभ्याग्निष्ट्वा गायत्र्या सयुक् छन्दसारोहतु सवितोष्णिहा सोमोऽनुष्टुभा बृहस्पतिर्बृहत्या मित्रावरुणौ पङ्क्त्ये-न्द्रस्त्रिष्टुभा विश्वे देवा जगत्या तानहमनु राज्याय साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाधिपत्याय स्वाव-श्यायातिष्ठायारोहामीत्येतामासन्दीमारोहेद्दक्षिणेनाग्रे जानुनाथ सव्येन तत्त-दितीँ चतुरुत्तरैर्वै देवाश्छन्दोभिः सयुग्भूत्वैतां श्रियमारोहन्यस्यामेत एतर्हि प्रतिष्ठिता अग्निर्गायत्र्या सवितोष्णिहा सोमोऽनुष्टुभा बृहस्पतिर्बृहत्या मित्रा-वरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा विश्वे देवा जगत्या ते एते अभ्यनूच्येते अग्नेर्गायत्र्य-

भवत्सयुग्वेति कल्पते ह वा अस्मै योगक्षेम उत्तरोत्त रिणीं ह श्रियमश्नुतेऽश्नुते ह प्रजानामैश्वर्यमाधिपत्यं य एवमेता अनु देवता एतामासन्दीमारोहति क्षत्रियः सन्नथैनमभिषेक्ष्यन्नपां शान्तिं वाचयति शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचम्मे सर्वाँ अग्नीँरप्सुषदो हुवे वो मयि वर्चो बलमोजो नि धत्तेति नैतस्याभिषिषिचानस्याशान्ता आपो वीर्यं निर्हणन्निति ६

अथैनमुदुम्बरशाखामन्तर्धायाभिषिञ्चतीमा आपः शिवतमा इमाः सर्वस्य भेषजीः इमा राष्ट्रस्य वर्धनीरिमा राष्ट्रभृतोऽमृताः याभिरिन्द्रमभ्यषिञ्चत्प्रजापतिः सोमं राजानं वरुणं यमम्मनुम्ताभिरद्भिरभिषिञ्चामि त्वामहं राज्ञां त्वमधिराजो भवेह महान्तं त्वा महीनां सम्राजं चर्षणीनां देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनद्देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यामग्नेस्तेजसा सुर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चमि बलाय श्रियै यशसेऽन्नाद्याय भूरिति य इछेदिममेव प्रत्यन्नमद्यादित्यथ य इछेद्द्विपुरुषम्भूर्भुव इत्यथ य इछेत्त्रिपुरुषं वाप्रतिमं वा भूर्भुवः स्वरिति तद्धैक आहुः सर्वाप्तिर्वा एषा यदेता व्याहृतयोऽतिसर्वेण हास्य परस्मै कृतम्भवतीति तमेतेनाभिषिञ्चेद्देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाबुभ्याम्पूष्णो हस्तभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसेऽन्नाद्यायेति तदु पुनः परिचक्षते यदसर्वेण वाचोऽभिषिक्तो भवतीश्वरो ह तु पुरायुषः प्रैतोरिति ह स्माह सत्यकामो जाबालो यमेताभिर्व्याहृतिभिर्नाभिषिञ्चन्तीतीश्वरो ह सर्वमायुरैतोः सर्वमाप्नोद्विजयेनेत्यु ह स्माहोद्दालक आरुणिर्यमेताभिर्व्याहृतिभिरभिषिञ्चन्तीति तमेतेनैवाभिषिञ्चेद्देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्तभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसेऽन्नाद्याय भूर्भुवः स्वरित्यथैतानि ह वै क्षत्रियादीजानाद्व्युत्क्रान्तानि भवन्ति ब्रह्मक्षत्रे ऊर्गन्नाद्यमपामोषधीनां रसो ब्रह्मवर्चसमिरा पुष्टिः प्रजातिः क्षत्ररूपं तदथो अन्नस्य रस ओषधीनां क्षत्रम्प्रतिष्ठा तद्यदेवामू पुरस्तादाहुती जुहोति तदस्मिन्ब्रह्मक्षत्रे दधाति ७

अथ यदौदुम्बर्यासन्दी भवत्यौदुम्बरश्चमस उदुम्बरशाखोर्ग्वा अन्नाद्यमुदुम्बर ऊर्जमेवास्मिंस्तदन्नाद्यं दधात्यथ यद्दधि मधु घृतम्भवत्यपां स ओषधीनां रसोऽपामेवास्मिंस्तदोषधीनां रसं दधात्यथ यदातपवर्ष्या आपो भवन्ति तेजश्च ह

वै ब्रह्मवर्चसं चातपवर्ष्या आपस्तेज एवास्मिंस्तद्ब्रह्मवर्चसं च दधात्यथ यच्छष्पाणि च तोक्मानि च भवन्तीरायै तत्पुष्ट्यै रूपमथो प्रजात्य इरामेवा-स्मिंस्तत्पुष्टिं दधात्यथो प्रजातिमथ यत्सुरा भवति क्षत्ररूपं तदथो अन्नस्य रसः क्षत्ररूपमेवास्मिंस्तद्दधात्यथो अन्नस्य रसमथ यद्दूर्वा भवति क्षत्रं वा एत-दोषधीनां यद्दूर्वा क्षत्रं राजन्यो नितत इव हीह क्षत्रियो राष्ट्रे वसन्भवति प्रतिष्ठित इव नितेव दूर्वावरोधैर्भूम्याम्प्रतिष्ठितेव तद्यद्दूर्वा भवत्योषधीनामेवास्मिंस्त-त्क्षत्रं दधात्यथो प्रतिष्ठामेतानि ह वै यान्यस्मादीजानाद्व्युत्क्रान्तानि भवन्ति तान्येवास्मिंस्तद्दधाति तैरेवैनं तत्समर्धयत्यथास्मै सुराकंसं हस्त आदधाति स्वादिष्ठया मदिष्ठया पवस्व सोम धारया इन्द्राय पातवे सुत इत्याधाय शान्तिं वाचयति नाना हि वां देवहितं सदस्कृतम्मा सं सृक्षाथाम्परमे व्योमनि सुरा त्वमसि शुष्मिणी सोम एष राजा मैनं हिंसिष्टं स्वां योनिमाविसन्ताविति सोमपीथस्य चैषा सुरापीथस्य च व्यावृत्तिः पित्वा यं रातिम्मन्येत तस्मा एनाम्प्रयछेत्तद्धि मित्रस्य रूपं मित्र एवैनां तदन्ततः प्रतिष्ठापयति तथा हि मित्रे प्रतितिष्ठति प्रतितिष्ठति य एवं वेद ८

अथोदुम्बरशाखामभि प्रत्यवरोहत्यूर्ग्वा अन्नाद्यमुदुम्बर ऊर्जमेव तदन्नाद्यमभि प्रत्यवरोहत्युपर्येवासिनो भूमौ पादौ प्रातिष्ठाप्य प्रत्यवरोहमाह प्रतितिष्ठामि द्यावापृथिव्योः प्रतितिष्ठामि प्राणापानयोः प्रातितिष्ठाम्यहोरात्रयोः प्रातितिष्ठा-म्यान्नपानयोः प्रति ब्रह्मन्प्रति क्षत्रे प्रत्येषु त्रिषु लोकेषु तिष्ठामीत्यन्ततः सर्वेणा-त्मना प्रतितिष्ठति सर्वस्मिन्ह वा एतस्मिन्प्रतितिष्ठत्युत्तरोत्तरिणीं ह श्रियम-श्नुतेऽश्नुते ह प्रजानामैश्वर्यमाधिपत्यं य एवमेतेन पुनरभिषेकेणाभिषिक्तः क्षत्रियः प्रत्यवरोहत्येतेन प्रत्यवरोहेण प्रत्यवरूह्योपस्थं कृत्वा प्राङासीनो नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्माण इति त्रिष्कृत्वो ब्रह्मणे नमस्कृत्य वरं ददामि जित्या अभिजित्यै विजित्यै संजित्या इति वाचं विसृजते स यन्नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मण इति त्रिष्कृत्वो ब्रह्मणे नमस्करोति ब्रह्मण एव तत्क्षत्रं वशमेति तद्यत्र वै ब्रह्मणः क्षत्रं वशमेति तद्राष्ट्रं समृद्धं तद्वीरवदा हास्मिन्वीरो जायतेऽथ यद्वरं ददामि जित्या अभिजित्यै विजित्यै संजित्या इति वाचं विसृजत एतद्वै वाचो जितं यद्ददामीत्याह यदेव वाचो जितां तन्म इदमनु कर्म संतिष्ठाता इति विसृज्य वाचमुपोत्थायाहवनीये समिधमभ्यादधाति समिदसि सम्वेङ्द्वेन्द्रियेण वीर्येण स्वाहेतीन्द्रियेणैव तद्वीर्येणात्मानमन्ततः समर्धय-

त्याधाय समिधं त्रीणि पदानि प्राङुदङ्ङभ्युत्क्रामति कव्सिरसि दिशाम्मयि देवेभ्यः कल्पत कल्पताम्मे योगक्षेमोऽभयम्मेऽस्त्वित्यपराजितां दिशमुपतिष्ठते जितस्यैवापुनःपराजयाय तैतदितीँ ९

देवासुरा वा एषु लोकेषु संयेतिरे त एतस्याम्प्राच्यां दिशि येतिरे तांस्ततोऽसुरा अजयंस्ते दक्षिणस्यां दिशि येतिरे तांस्ततोऽसुरा अजयंस्ते प्रतीच्यां दिशि येतिरे तांस्ततोऽसुरा अजयंस्त उदीच्यां दिशि येतिरे तांस्ततोऽसुरा अजयंस्त एतस्मिन्नवान्तारदेशे येतिरे य एष प्राङुदङ्ते ह ततो जिग्युस्तं यदि क्षत्रिय उपधावेत्सेनयोः समायत्योस्तथा मे कुरु यथाहमिमां सेनां जयानीति स यदि तथेति ब्रूयाद्वनस्पते वीड्वङ्गो हि भूया इत्यस्य रथोपस्थमभिमृश्याथैनम्ब्रूयादातिष्ठस्वैतां ते दिशमभिमुखः संनद्धो रथोऽभि प्रवर्ततां स उदङ्स प्रत्यङ्स दक्षिणा स प्राङ्सोऽभ्यमित्रं इत्यभीवर्तेन हविषेत्येवैनमावर्तयेदथैनमन्वीक्षेताप्रतिरथेन शासेन सौपर्णेनेति जयति ह तां सेनां यद्यु वा एनमुपधावेत्संग्रामं संयतिष्यमाणस्तथा मे कुरु यथाहमिमं संग्रामं संजयानीत्येतस्यामेवैनं दिशि यातयेञ्जयति ह तं संग्रामं यद्यु वा एनमुपधावेद्रा-ष्ट्रादपरुध्यमानस्तथा मे कुरु यथाहमिदं राष्ट्रम्पुनरवगछानीत्येतामेवैनं दिशमुपनिष्कतमवेत्तथा ह राष्ट्रम्पुनरवगछत्युपस्थायामित्राणां व्यपनुत्तिम्ब्रुवन्गृहानभ्येत्यप प्राच इन्द्र विश्वाँ अमित्रानिति सर्वतो हास्मा अनमित्रमभयम्भवत्युत्तरोत्तरिणीं ह श्रियमश्नुतेऽश्नुते ह प्रजानामैश्वर्यमाधिपत्यं य एवमेताममित्राणां व्यपनुत्तिम्ब्रुवन्गृहानभ्येत्येत्य गृहान्पश्चाद्गृह्यस्याग्नेरुपविष्टायान्वातब्धाय ऋत्विगन्ततः कंसेन चतुर्गृहीतस्तिस्र आज्याहुतीरैन्द्रीः प्रपदं जुहोत्यनार्त्या अरिष्ट्या अज्यान्या अभयाय १०

पर्यू षु प्र धन्व वाजसतये परि वृत्रा भूर्ब्रह्म प्राणममृतम्प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये सह प्रजया सह पशुभिरणि सक्षणिर्द्विषस्तरध्या ऋणया न ईयसे स्वाहा अनो हि त्वा सुतं सोम मदामसि महे सम भुवो ब्रह्म प्राणममृतम्प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये सह प्रजया सह पशुभिर्यराज्ये वाजाँ अभि पवमान प्र गाहशे स्वाहा अजीजनो हि पवमान सूर्यं विधारे श स्वर्ब्रह्म प्राणममृतम्प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये सह प्रजया सह पशुभिः क्मना पयो गोजीरया रंहमाणः पुरंध्या स्वाहेत्यनार्तो ह वा

अरिष्टोऽजीतः सर्वातो गुप्तस्त्रय्यै विद्यायै रूपेण सर्वा दिशोऽनुसंचरत्यैन्द्रे लोके प्रतिष्ठितो यस्मा एता ऋत्विगन्ततः कंसेन चतुर्गृहीतास्तिस्र आज्याहुतीरैन्द्रीः प्रपदं जुहोत्यथान्ततः प्रजातिमाशास्ते गवामश्वानाम्पुरुषाणामिह गावः प्र जायध्वमिहाश्वा इह पूरुषाः इहो सहस्रदक्षिणो वीरस्त्राता नि षीदत्विति बाहुर्ह वै प्रजया पशुभिर्भवति य एवमेतामन्ततः प्रजातिमाशास्ते गवामश्वानाम्पुरुषा-णामेष ह वाव क्षत्रियोऽविकृष्टो यमेवंविदो याजयन्त्यथ ह तं व्येव कर्षन्ते यथा ह वा इदं निषादा वा सेलगा वा पापकृतो वा वित्तवन्तम्पुरुषमरण्ये गृथीत्वा कर्तमन्वस्य वित्तमादाय द्रवन्त्येवमेव त ऋत्विजो यजमानं कर्तमन्वस्य वित्तमादाय द्रवन्ति यमनेवंविदो याजयन्त्येतद्ध स्म वै तद्विद्वानाह जनमेजयः पारिक्षित एवंविदं हि वै मामेवंविदो याजयन्ति तस्मादहं जया-म्यभीत्वरीं सेनां जयाम्यभीत्वर्या सेनया न मा दिव्या न मानुष्य इषव ऋछ-नियेष्यामि सर्वमायुः सर्वभूमिर्भविष्यामीति न ह वा एनं दिव्या न मानुष्य इषव ऋछन्त्येति सर्वमायुः सर्वभूमिर्भवति यमेवंविदो याजयन्ति याजयन्ति ११ २

## अध्याय ३८ खण्डः १-३

अथात ऐन्द्रो महाभिषेकस्ते देवा अब्रुवन्सप्रजापतिका अयंवै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतम इममेवाभिषिञ्चामहा इति तथेति तद्वै तदिन्द्रमेव तस्मा एतामासन्दीं समभरन्नृचं नाम तस्यै बृहच्च रथंतरं च पूर्वौ पादावकुर्वन्वैरूपं च वैराजं चापरौ शाक्वररैवते शीर्षण्ये नौधसं च कालेयं चानूच्ये ऋचः प्राचीनातानान्सामानि तिरश्चीनवायान्यजूंष्यतीकाशान्यश आस्तरणं श्रियमुपबर्हणं तस्यै सविता च बृहस्पतिश्च पूर्वौ पादावधारयतां वायुश्च पूषा चापरौ मित्रावरुणौ शीर्षण्ये अश्विनावनूच्ये स एतामासन्दी-मारोहद्वसवस्त्वा गायत्रेण छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्नारोहन्तु तानन्वारोहामि साम्राज्याय रुद्रास्त्वा त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहत साम्नारोहन्तु तानन्वारोहामि भौज्याया दित्यास्त्वा जागतेन छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्नारोहन्तु तानन्वारोहामि स्वाराज्याय विश्वे त्वा देवा आनुष्टुभेन छन्दसैकविंशेन स्तोमेन वैराजेन साम्नारोहन्तु तानन्वारोहामि वैराज्याय साध्याश्च त्वाप्त्याश्च देवाः पाङ्क्तेन छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्नारोहन्तु तानन्वारोहामि राज्याय मरुतश्च त्वाङ्गिरसश्च देवा अतिछन्दसा

छन्दसा त्रयस्त्रिङ्शेन स्तोमेन रैवतेन साम्नारोहन्तु तानन्वारोहामि पारमेष्ठ्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठायारोहामीत्येतामासन्दीमारोहत्तमे-तस्यामासन्द्यामासीनं विश्वे देवा अब्रुवन्न वा अनभ्युत्क्रुष्ट इन्द्रो वीर्यं कर्तुम-र्हत्यभ्येनमुत्क्रोशामेति तैतिएति तां विश्वे देवा अभ्युदक्रोशन्निमं देवा अभ्यु-त्क्रोशत सम्राजं साम्राज्यम्भोजम्भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यं राजानं राजपितरम्परमेष्ठिनम्पारमेष्ठ्यं क्षत्रमजनि क्षत्रियोऽजनि विश्वस्य भूत-स्याधिपतिरजनि विशामत्ताजनि पुराम्भेत्ताजन्यसुराणां हन्ताजनि ब्रह्मणो गोप्ताजनि धर्मस्य गोप्ताजनीति तमभ्युत्क्रुष्टम्प्रजापतिरभिषेक्ष्यन्नेतयर्चाभ्य-मन्त्रयत १२

नि षसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठाय सुक्रतुरिति तमेतस्यामासन्द्यामासीनम्प्रजापतिः पुरस्तात्तिष्ठन्प्रत्यङ्मुख औदुम्ब-र्यार्द्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभ्यषिञ्चदिमा आपः शिवतमा इत्येतेन तृचेन देवस्य त्वेति च यजुषा भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिः १३

अथैनम्प्राच्यां दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय तस्मादेतस्याम्प्राच्यां दिशि ये केच प्राच्यानां राजानः साम्राज्यायैव तेऽभिषिच्यन्ते सम्राळ् इत्येनान-भिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनं दक्षिणस्यां दिशि रुद्रा देवाः षड्भिश्चैव पञ्चाविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याबृतिभिर्भौज्याय तस्मादेतस्यां दक्षिणस्यां दिशि ये केच सत्वतां राजानो भौज्यायैव तेऽभिषिच्यन्ते भोजेत्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनम्प्रतीच्यां दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभि-रभ्यषिञ्चनु एतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्याय तस्मादेतस्याम्प्रतीच्यां दिशि ये केच नीच्यानां राजानो येऽपाच्यानां स्वारा-ज्यायैव तेऽभिषिच्यन्ते स्वराळ् इत्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनमुदीच्यां दिशि विश्वे देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्य-षिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्याय तस्मादेतस्या-

मुदीच्यां दिशि ये केच परेण हिमवन्तं जनपदा उत्ततकुरव उत्तरमद्रा इति वैराज्यायैव तेऽभिषिच्यन्ते विराळ् इत्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनमस्यां ध्रुवायाम्मन्ध्यमायाम्प्रतिष्ठायां दिशि साध्याश्चाप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनतिएन च यजुषैताभिश्च व्याहृतिभी राज्याय तस्मादस्यां ध्रुवायाम्मध्यमायाम्प्रतिष्ठायां दिसि ये केच कुरुपञ्चालानां राजानः सवशोशीनराणां राज्यायैव तेऽभिषिच्यन्ते राजेत्येनान-भिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनमूर्ध्वायां दिशि मरुत-श्चाङ्गिरसश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजु-षैताभिश्च व्याहृद्भिः पारमेष्ठ्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठा-येति स परमेष्ठी प्राजापत्योऽभवत्स एतेन महाभिषेकेणाभिषिक्त इन्द्रः सर्वा जितीरजयत्सर्वाँल्लोकानविन्दत्सर्वेषां देवानां श्रैष्ठ्यमतिष्ठाम्परमातमगछ-त्साम्राज्यम्भौज्यं स्वाराज्यं वैराज्यम्पारमेष्ठ्यं राज्यम्माहाराज्यमाधिपत्यं जि-त्वास्मिँल्लोके स्वयम्भूः स्वराळ् अमृतोऽमुष्मिन्स्वर्गे लोके सर्वान्कामा-नाप्त्वामृतः समभवत्समभवत् १४ ३

अध्याय ३९ खण्डः १-९

स य इछेदेवंवित्क्षत्रियमायं सर्वा जितीर्जयेतायं सर्वाँल्लोकान्विन्देतायं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठाम्परमतां गछेत साम्राज्यम्भौज्यं स्वाराज्यं वैराज्य-म्पारमेष्ठ्यं राज्यम्माहाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्सार्वभौमः सा-र्वायुष आन्तादा परार्धात्पृथिव्यै समुद्रपर्यन्ताया एकराळ् इति तं एतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वाऽभिषिञ्चेद्यां च रात्रीमजायथा यां च प्रेतासि तदुभयमन्तरेणेष्टापूर्तं ते लोकं सुकृतमायुः प्रजां वृञ्जीय यदि मे द्रुह्येरिति स य इछेदेवंवित्क्षत्रियो ऽहं सर्वा जितीर्जयेयमहं सर्वाँल्लोकान्विन्देयमहं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठाम्परमतां गछेयं साम्राज्यम्भौज्यं स्वाराज्यम्वैराज्यम्पारमेष्ठ्यं राज्यम्माहाराज्यमाधिपत्यमहं समन्तपर्यायी स्यां सार्वभौमः सार्वायुष आन्तादा परार्धत्पृथिव्यै समुद्रपर्यन्ताया एकराळिति स न विचिकित्सेत्स ब्रूयत्सह श्रद्धया यां च रात्रीमजायेऽहं यां च प्रेतास्मि तदुभयमन्तरेणेष्टापूर्तम्मे लोकं सुकृतमायुः प्रजां वृञ्जीथा यदि ते द्रुह्येयमिति १५

अथ ततो ब्रूयच् चतुष्टयानि वानस्पत्यानि सम्भरत नैयग्रोधान्यौदुम्बरा-

ण्याश्वत्थानि प्लाक्षाणीति क्षत्रं वा एतद्वनस्पतीनां यन्नग्रोधो यन्नैयग्रोधानि सम्भरन्ति क्षत्रमेवास्मिंस्तद्दधाति भौज्यं वा एतद्वनस्पतीनां यदुदुम्बरो यदौदुम्बराणि सम्भरन्ति भौज्यमेवास्मिंस्तद्दधाति साम्राज्यं वा एतद्वनस्पतीनां यदश्वत्थो यदाश्वत्थानि सम्भरन्ति साम्राज्यमेवास्मिंस्तद्दधाति स्वाराज्यं च ह वा एतद्वैराज्यं च वनस्पतीनां यत्प्लक्षो यत्प्लाक्षाणि सम्भरन्ति स्वाराज्यवैराज्ये एवास्मिंस्तद्दधात्यथ ततो ब्रूयाच् चतुष्टयान्यौषधानि सम्भरत तोक्मकृतानि व्रीहीणाम्महाव्रीहीणाम्प्रियंगूनां यवानामिति क्षत्रं वा एतदोषधीनां यद्व्रीहयो यद्व्रीहीणां तोक्म सम्भरन्ति क्षत्रमेवास्मिंस्तद्दधाति साम्राज्यं वा एतदोषधीनां यन्महाव्रीहयो यन्माहाव्रीहीणां तोक्म सम्भरन्ति साम्राज्यमेवास्मिंस्तद्दधाति भौज्यं वा एतदोषधीनां यत्प्रियंगवो यत्प्रियंगूनां तोक्म सम्भरन्ति भौज्यमेवास्मिंस्तद्दधाति सैनान्यं वा एतदोषधीनां यद्यवा यद्यवानां तोक्म सम्भरन्ति सैनान्यमेवास्मिंस्तद्दधाति १६

अथास्मा औदुम्बरीमासन्दीं सम्भरन्ति तस्या उक्तम्ब्राह्मणमौदुम्बरश्चमसो वा पात्री वोदुम्बरशाखा तानेतान्सम्भारान्सम्भृत्यौदुम्बर्याम्पात्र्यां वा चमसे वा समावपेयुस्तेषु समोप्तेषु दधि मधु सर्पिरातपवर्ष्या आपोऽभ्यानीय प्रतिष्ठाप्यैतमासन्दीमभिमन्त्रयेत बृहच्च ते रथंतरं च पूर्वौ पादौ भवतां वैरूपं च वैराजं चापरौ शाक्वररैवते शीर्षण्ये नौधसं च कालेयं चानूच्ये ऋचः प्राचीनातानाःसामानि तिरश्चीनवाया यजूंष्यतीकाशा यश आस्तरणं श्रीरुपबर्हणं सविता च ते बृहस्पतिश्च पूर्वौ पादौ धारयतां वायुश्च पूषा चापरौ मित्रावरुणौ शीर्षण्ये अश्विनावनूच्ये इत्यथैनं एतामासन्दीमारोहयेद्वसवस्त्वा गायत्रेण छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्नारोहन्तु तानन्वारोह साम्राज्याय रुद्रास्त्वा त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्नारोहन्तु तानन्वारोह भौज्याया दित्यास्त्वा जागतेन छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्नारोहन्तु तानन्वारोह स्वाराज्याय विश्वे त्वा देवा आनुष्टुभेन छन्दसैकविंशेन स्तोमेन वैराजेन साम्नारोहन्तु तानन्वारोह वैराज्याय मरुतश्च त्वाङ्गिरसश्च देवा अतिछन्दसा छन्दसा त्रयस्त्रिंशेन स्तोमेन रैवतेन साम्नारोहन्तु तानन्वारोह पारमेष्ठ्याय साध्याश्च त्वाप्त्याश्च देवाः पाङ्क्तेन छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्नारोहन्तु तानन्वारोह राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठायारोहेत्येतामासन्दीमारोहयेत्तमेतस्यामासन्द्यामासीनं

राजकर्तारो ब्रूयुर्न वा अनभ्युत्क्रुष्टः क्षत्रियो वीर्यं कर्तुमर्हत्यभ्येनमुत्क्रोशामेति तथेति तं राजकर्तारोऽभ्युत्क्रोशन्तीमं जना अभ्युत्क्रोशत सम्राजं साम्राज्यम्भोजम्भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यम्परमेष्ठिनम्पारमेष्ठ्यं राजानां राजपितरं क्षत्रमजनि क्षत्रियोऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ताजन्यमित्राणां हन्ताजनि ब्राह्मणानाम्गोप्ताजनि धर्मस्य गोप्ताजनीति तमभ्युत्क्रुष्टमेवंविदभिषेक्ष्यन्नेतयर्चाभिमन्त्रयेत १७

नि षसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठाय सुक्रतुरिति तमेतस्यामासन्द्यामासीनमेवंवित्पुरस्तात्तिष्ठन्प्रत्यङ्मुख औदुम्बर्यार्द्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभिषिञ्चतिमा आपः शिवतमा इत्येतेन तृचेन देवस्य त्वेति च यजुषा भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिः १८

प्राच्यां त्वा दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय दक्षिणस्यां त्वा दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भौज्याय प्रतीच्यां त्वा दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्यायोदीच्यां त्वा दिशि विश्वे देवाः षड्भिश्चैव पञ्चविन्शैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेना च यजुषैताभिश्चा व्याहृतिभिर्वैराज्यायोर्ध्वायां त्वा दिशि मरुतश्चाङ्गिरासश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृबृतिभिः पारमेष्ठ्यायास्यां त्वा ध्रुवायां मध्यमायाम्प्रतिष्ठायां दिशि साध्याश्चाप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभी राज्याय माहाराज्याधिपत्याय स्वावश्यायाधिष्ठायेति स परमेष्ठी प्राजापत्यो भवति स एतेनैन्द्रेन महाभिषेकेणाभिषिक्तः क्षत्रियः सर्वा जितीर्जयति सर्वांल्लोकान्विन्दति सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठाम्परमतां गछति साम्राज्यम्भौज्यं स्वाराज्यम्पारमेष्ठ्यं राज्यम्माहाराज्यमाधिपत्यं जित्वास्मिँल्लोके स्वयम्भूः स्वराळमृतोऽमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वामृतः सम्भवति यमेतेननिद्रेन

महाभिषेकेण क्षत्रियं शापयित्वा भिषिञ्चति १९

इन्द्रियं वा एतदस्मिँल्लोके यद्दधि यद्दध्नाभिषिञ्चतीन्द्रियमेवास्मिंस्तद्दधाति रसो वा एष ओषधिवनस्पतिषु यन्मधु यन्मध्वाभिषिञ्चति रसमेवास्मिंस्तद्दधाति तेजो वा एतत्पशूनां यद्घृतं यद्घृतेनाभिषिञ्चति तेज एवास्मिंस्तद्दधात्यमृतं वा एतदस्मिँल्लोके यदापो यदद्भिरभिषिञ्चत्यमृतत्वमेवास्मिंस्तद्दधाति सोऽभिषिक्तोऽभिषेक्त्रे ब्राह्मणाय हिरण्यं दद्यात्सहस्रं दद्यात्क्षेत्रं चतुष्पाद्दद्यादथाप्याहुरसंख्यातमेवापरिमितं दद्यादपरिमितो वै क्षत्रियोऽपरिमितस्यावरुद्ध्या इत्यथास्मै सुराकंसं हस्त आदधाति स्वादिष्ठया मदिष्ठया पवस्व सोम धारया इन्द्राय पातवे सुत इति ताम्पिबेद्यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि अभि त्वा वृषभा सुते सुतं सृजामि पीतये तृम्प व्यश्नुही मदमिति यो ह वाव सोमपीथः सुरायाम्प्रविष्टः स हैव तेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य भक्षितो भवति न सुरा ताम्पीत्वाभिमन्त्रयेतपाम सोमं शं नो भवेति तद्यथैवादः प्रियः पुत्रः पितरम्प्रिया वा जाया पतिं सुखं शिवमुपस्पृशत्या विस्रस एवं हैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य सुरा वा सोमो वान्यद्वान्नाद्यं सुखं शिवमुपस्पृशत्या विस्रसः २०

एतेन ह वा ऐन्द्रेन महाभिषेकेण तुरः कावषेयो जनमेजयम्पारिक्षितमभिषिषेच तस्मादु जनमेजयः पारिक्षितः समन्तं सर्वतः पृथिवीन्जयन्परीयायाश्वेन च मेध्येनेजे तदेषाभि यज्ञगाथा गीयते आसन्दीवति धान्यादं रुक्मिणं हरितस्रजमश्वम्बहन्ध सारङ्गं देवेभ्यो जनमेजय इत्येतेन ह वा अनिद्रेण महाभिषेकेण च्यवनो भार्गवः शार्यातम्मानवमभिषिषेच तस्मादु शार्यातो मानवः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे देवानां हापि सत्रे गृहपतिरासैतेन ह वा ऐन्द्रेण महाभिषेकेण सोमशुष्मा वाजरत्नायनः शतानीकं सात्राजितमभिषिषेच तस्मादु शतनीकः सात्राजितः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेज एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदावाम्बाष्ठ्यमभिषिषिचतुस्तस्माद्वाम्बाष्ठ्यः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेज एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदौ युधांश्रौष्टिमग्रसैन्यमभिषिषिचतुस्तस्मादु युधांश्रौष्टिरौग्रसैन्यः समन्तं सर्वतः पृथि-

वीं जयन्परीयायाश्वेन च मेध्येनेज एतेन ह वा ऐन्द्रेण महाभिषेकेण कश्यपो विश्वकर्माणम्भौवनमभिषिषेच तस्मादु विश्वकर्मा भौवनः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे भूमिर्ह जगावित्युदाहरन्ति न मा मर्त्यः कश्चन दातुमर्हति विश्वकर्मन्भौवन मां दिदासिथ निमङ्क्ष्येऽहं सलिलस्य मध्ये मोघस्त एष कश्यपायास संगर इत्येतेन ह वा ऐन्द्रेण महाभिषेकेण वसिष्ठह् सुदासम्पैजवनमभिषिषेच तस्मादु सुदाः पैजवनः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेज एतेन ह वा ऐन्द्रेण महाभिषेकेण संवर्त आङ्गिरसो मरुत्तमविक्षितमभिषिषेच तस्मादु मरोत्त आविक्षितः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे आविक्षितस्य कामप्रेर्विश्वे देवाः सभासद इति २१

एतेन ह वा ऐन्द्रेण महाभिषेकेणोदमय आत्रेयोऽङ्गमभिषिषेच तस्माद्वाङ्गः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे स होवाचालोपाङ्गो दश नागसहस्राणि दश दासीसहस्राणि ददामि ते ब्राह्मणोप मास्मिन्यज्ञे ह्वयस्वेति तदप्येते श्लोका अभिगीताः याभिर्गोभिरुदमयम्प्रैयमेधा अयाजयन्द्वेद्वे सहस्रे बद्वानामात्रेयो मध्यतोऽददातष्टाशीतिसहस्राणि श्वेतान्वैरोचनो हयान्प्रष्टी-न्निश्चृत्य प्रायछद्यजमाने पुरोहिते देशाद्देशात्समोळ्हानां सर्वासामा-ढ्यदुहि-तृणां दशाददात्सहस्राण्यात्रेयो निष्ककण्ठ्यः दश नागसहस्राणि दत्त्वात्रे-योऽवचत्नुके श्रान्तः पारिकुटान्प्रैप्सद्दानेनाङ्गस्य ब्राह्मणः शतं तुभ्यं शतं तुभ्य-मिति स्मैव प्रताम्यति सहास्रं तुभ्यमित्युक्त्वा प्राणान्स्म प्रतिपद्यत इति २२

एतेन ह वा ऐन्द्रेण महाभिषेकेण दीर्घतमा मामतेयो भरतं दौःषन्तिमभिषिषेच तस्मादु भरतो दौःषन्तिः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वैरु च मेध्यैरीजे तदप्येते श्लोका अभिगीताः हिरण्येन परिवृतान्कृष्णाञ्छुक्लदतो मृगान्मष्णारे भरतोऽददाच्छतम्बद्वानि सप्त च भरतस्यैष दौःषन्तेरग्निः साचीगुणे चितः यस्मिन्सहस्रम्ब्राह्मणा बद्वशो गा विभेजिरे अष्टासप्ततिम्भरतो दौःषन्ति-र्यमुनामनु गङ्गायां वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतं हयान्त्रयस्त्रिंशच्छतं राजाश्वा-न्बद्ध्वाय मेध्यान्दौःषन्तिरत्यगाद्राज्ञोऽमायान्मायवत्तरः महाकर्म भरतस्य न पूर्वे नापरे जनाः दिवम्मर्त्य इव हस्ताभ्यां नोदापुः पञ्च मानवा इत्येतं ह वा ऐन्द्रम्महाभिषेकम्बृहदुक्थ ऋषिर्दुर्मुखाय पाञ्चालाय प्रोवाच तस्मादु दुर्मुखः

पाञ्चालो राजा सन्विद्यया समन्तं सर्वतः पृथिवीं जयन्परीयायैतं ह वा ऐन्द्रम्महाभिषेकं वासिष्ठः सात्यहव्योऽत्यरातये जानंतपये प्रोवाच तस्माद्वत्य- त्रातिर्जानंतपिरराजा सन्विद्यया समन्तं सर्वतः पृथिवीं जयन्परीयाय स होवाच वासिष्ठः सात्यहव्यो ऽजैषीर्वै समन्तं सर्वतः पृथिवीम्महन्मा गमयेति स होवाचात्यरातिर्जानंतपिर्यदा ब्राह्मणोत्तरकुरूञ्जयेयमथ त्वमु हैव पृथिव्यै राजा स्याः सेनापतिरेव तेऽहं स्यामिति स होवाच वासिष्ठः सात्यहव्यो देवक्षेत्रं वै तन्न वै तन्मर्त्यो जेतुमर्हत्यद्रुक्षो वै म आत इदं दद इति ततो हात्यरातिं जानंतपिमात्तवीर्यं निःशुक्रममित्रतपनः शुष्मिणः शैब्यो राजा जघान तस्मादेवं विदुषे ब्राह्मणायैवं चक्रुषे न क्षत्रियो द्रुह्येन्नेद्राष्ट्रदवपद्येय नेद्वा मा प्राणो जहदि ति जहदिति २३ ४

अध्याय ४० खण्डः १-५

अथातः पुरोधाया एव न ह वा अपुरोहितस्य रज्ञो देवा अन्नमदन्ति तस्माद्राजा यक्ष्यमाणो ब्राह्मणम्पुरोदधीत देवा मेऽन्नमदन्नित्यग्नीन्वा एष स्वर्ग्यान्राजोद्धरते यत्पुरोहितं तस्य पुरोहित एवाहवनीयो भवति जाया गार्हपत्यः पुत्रो- ऽन्वाहार्यपचनः स यत्पुरोहिताय करोत्याहवनीय एव तज्जुबोत्यथ यज्ञायायै करोति गार्हपत्य एय तज्जुहोत्यथ यत्पुत्राय करोत्यन्वाहार्यपचन एव तज्जुहोति त एनं शान्ततनवोऽभिहुता अभिप्रीताः स्वर्गं लोकमभिवहन्ति क्षत्रं च बलं च राष्ट्रं च विशं च त एवैनमशान्ततनवोऽनभिबुता अनभिप्रीताः स्वर्गाल् लोकान्नुदन्ते क्षत्राच्च बलाच्च राष्ट्राच्च विशश्चाग्निर्वा एष वैश्वानरः पञ्चमे- निर्यत्पुरोहितस्तस्य वाच्येवैका मेनिर्भवति पादयोरेका त्वच्येका हृदय एकोपस्थ एका ताभिर्ज्वलन्तीभिर्दीप्यमानाभिरुपोदेति राजानं स यदाह क्व भगवोऽवात्सीस्तृणान्यस्मा आहरतेति तेनास्य तां शमयति यास्य वाचि मेनिर्भवत्यथ यदस्मा उदकमानयन्ति पाद्यं तेनास्य तां शमयति यास्य पादयोर्मेनिर्भवत्यथ यदेनमलंकुर्वन्ति तेनास्य तां शमयति यास्य त्वचि मेनिर्भवत्यथ यदेनं तर्पयन्ति तेनास्य तां शमयति यास्य हृदये मेनिर्भवत्यथ यदस्यानारुद्धो वेश्मसु वसति तेनास्य तां शमयति यास्योपस्थे मेनिर्भवति स एनं शान्ततनुरभिहुतोऽभिप्रीतः स्वर्गं लोकमभिवहति क्षत्रं च बलं च राष्ट्रं च विशं च स एवैनमशान्ततनुरनभिहुतोऽनभिप्रीतः स्वार्गल्लोकान्नुदते क्षत्राच्च बलाच्च राष्ट्राच्च विशश्च २४

अग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत्पुरोहितस्ताभी राजानम्परिगृह्य तिष्ठति समुद्र इव भूमिमयुवमार्यस्य राष्ट्रम्भवति नैनम्पुरायुषः प्राणो जहात्याजरसं जीवति सर्वमायुरेति न पुनर्म्रियते यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितः क्षत्रेण क्षत्रं जयति बलेन बलमश्नुते यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितस्तस्मै विशः संजानते सम्मुखा एकमनसो यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितः २५

तदप्येतदृषिणोक्तं स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येणेति सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि तानेव तच्छुष्मेण वीर्येणाधितिष्ठति बृहस्पतिं यः सुभृतम्बिभर्तीति बृथस्पतिर्ह वै देवानाम्पुरोहितस्तमन्वन्ये मनुष्यराज्ञाम्पुरोहिता बृहस्पतिं यः सुभृतम्बिभर्तीति यदाह पुरोहितं यः सुभृतं बिभर्तीत्येव तदाह वल्गूयति वन्दते पूर्वभाजमित्यपचितिमेवास्मा एतदाह स इत्क्षेति सुधित ओकसि स्व इति गृहा वा ओकः स्वेष्वेव तद्गृहेषु सुहितो वसति तस्मा इळा पिन्वते विश्वदानीमित्यन्नं वा इळान्नमेवास्मा एतदूर्जस्वच्छ-श्वद्भवति तस्मै विशः स्वयमेवा नमन्त इति राष्ट्राणि वै विशो राष्ट्राण्येवैनं तत्स्वयमुपनमन्ति यस्मिन्ब्रह्मा राजनि पूर्व एतीति पुरोहितमेवैतदाहाप्रतीतो जयति सं धनानीति राष्ट्राणि वै धनानि तान्यप्रतीतो जयति प्रतिजन्यान्युत या सजन्येति सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि तानप्रतीतो जयत्यवस्यवे यो वरिवः कृणोतीति यदाहावसीयसे यो वसीयः करोतीत्येव तदाह ब्रह्मणे राजा तमवन्ति देवा इति पुरोहितमेवैतदभिवदति २६

यो न वै त्रीन्पुरोहितांस्त्रीन्पुरोधातृन्वेद स ब्राह्मणः पुरोहितः स वदेत पुरोधाया अग्निर्वाव पुरोहितः पृथिवी पुरोधाता वायुर्वाव पुरोहितोऽन्तरिक्षम्पुरो-धातादित्यो वाव पुरोहितो द्यौः पुरोधातैष ह वै पुरोहितो य एवं वेदाथ स तिरोहितो य एवं न वेद तस्य राजा मित्रम्भवति द्विषन्तमपबाधते यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितः क्षत्रेण क्षत्रं जयति बलेन बलमश्नुते यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितस्तस्मै विशः संजानते सम्मुखा एकमनसो यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितो भूर्भुवः स्वरोममोऽहमस्मि स त्वं स त्वं अस्यमोऽहं द्यौरहम्पृथिवी त्वं सामाहमृक्त्वं तावेह संवहावहै पुरा अण्यस्मात्महाभयात् तनूरसि तन्वम्मे पाहि या ओषधिः सोमराज्ञीर्बह्वीः शतविचक्षणाः ता मह्यमस्मिन्नासनेऽछिद्रं शर्म यछत या ओषधीः सोमराज्ञी-

र्विष्ठिताः पृथिवीमनु ता मह्यमस्मिन्नासनेऽछिद्रं शर्म यछत अस्मिन्राष्ट्रे श्रियमा वेशयाम्यतो देवीः प्रति पश्याम्यापः दक्षिणम्पादमव नेनिजेऽस्मिन्राष्ट्र इन्द्रियं दधामि सव्यम्पादमव नेनिजेऽस्मि राष्ट्र इन्द्रियं वर्धयामि पूर्वमन्यमपरम-न्यम्पादावव नेनिजे देवा राष्ट्रस्य गुप्त्या अभयस्यावरुद्ध्यै आपः पादावनेज-नीर्द्विषन्तं निर्दहन्तु मे २७

अथातो ब्रह्मणः परिमरो यो ह वै ब्रह्मणः परिमरं वेद पर्येनं द्विषन्तो भ्रातृव्याः परि सपत्ना म्रियन्तेऽयं वै ब्रह्म योऽयम्पवते तमेताः पञ्च देवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निर्विद्युद्वै विद्युत्य वृष्टिमनुप्रविशति सान्तर्धीयते तां न निर्जानन्ति यदा वै म्रियतेऽथान्तर्धीयतेऽथैनां न निर्जानन्ति स ब्रूयाद्विद्युतो मरणे द्विषन्मे म्रियतां सोऽन्तर्धीयतां तम्मा निर्ज्ञसिषुरिति क्षिप्रं हैवैनं न निर्जानन्ति वृष्टिर्वै वृष्ट्वा चन्द्रमसमनुप्रविशति सान्तर्धीयते तां न निर्जानन्ति यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति स ब्रूयाद्वृष्टेर्मरणे द्विषन्मे म्रियतां सोऽन्तर्धीयतां तम्मा निर्ज्ञासिषुरिति क्षिप्रं हैवैनं न निर्जानन्ति चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति सोऽन्तर्धीयतां तं न निर्जानन्ति यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति स ब्रूयाच्चन्द्रमसो मरणे द्विषन्मे म्रियतां सोऽन्तर्धीयतां तम्मा निर्ज्ञासिषुरिति क्षिप्रं हैवैनं न निर्जानन्त्यादित्यो वा अस्तं यन्नग्निमनुप्रविशति सोऽन्तर्धीयते तं न निर्जानन्ति यदा वै म्रियतेऽथान्त-र्धीयतेऽथैनान्न निर्जानन्ति स ब्रूयादादित्यस्य मरणे द्विषन्मे म्रियतां सोऽन्त-र्धीयतां तम्मा निर्ज्ञासिषुरिति क्षिप्रं हैवैनं ना निर्जानन्त्याग्निर्वा उद्वान्वायुम-नुप्रविशति सोऽन्तर्धियते तं न निर्जानन्ति यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति स ब्रूयादग्नेर्मराणे द्विषन्मे म्रियतां सोऽन्तर्धीयतां तम्मा निर्ज्ञासि-षुरिति क्षिप्रं हैवैनं न निर्जानन्ति ता वा एता देवता अत एव पुनर्जायन्ते वायोरग्निर्जायते प्राणाद्धि बलान्मथ्यमानोऽधिजायते तं दृष्ट्वा ब्रूयादग्निर्जा-यताम्मा मे द्विषञ्जन्यत एव पराङ्प्रजिध्यत्विति अतो हैव पराङ्प्रजिध्यत्यग्नेर्वा आदित्यो जायते तं दृष्ट्वा ब्रूयादादित्यो जायताम्मा मे द्विषञ्जन्यत एव पराङ्प्रजिध्यत्वित्यतो हैव पराङ्प्रजिध्यत्यादित्याद्वै चन्द्रमा जायते तं दृष्ट्वा ब्रूयाच् चन्द्रमा जायताम्मा मे द्विषञ्जन्यत एव पराङ्प्रजिध्यत्विति अतो हैव पराङ्प्रजिध्यति चन्द्रमसो वै वृष्टिर्जायते तां दृष्ट्वा ब्रूयाद्वृष्टिर्जायताम्मा मे द्विषञ्जन्यत एव पराङ्प्रजिध्यत्वित्यतो हैव पराङ्प्रजिध्यति वृष्टेर्वै विद्युज्जायते

तां दृष्ट्वा ब्रूयाद्विद्युज्ञायताम्मा मे द्विषञ्जन्यत एव पराङ्प्रजिध्यत्वित्यतो वैव परान्प्रजिध्यति स एष ब्रह्मणः परिमरस्तमेतम्ब्रह्मणः परिमरम्मैत्रेयः कौषारवः सुत्वने कैरिशये भार्गायणाय राज्ञे प्रोवाच तं ब पञ्च राजानः परिमम्रुस्ततः सुत्वा महञ्जगाम तस्य व्रतं न द्विषतः पूर्व उपविशेद्यदि तिष्ठन्तम्मन्येत तिष्ठेतैव न द्विषतः पूर्वः संविशेद्यद्यासीनम्मन्येतासीतैव न द्विषतः पूर्वः प्रस्वप्याद्यदि जाग्रतम्मन्येत जागृयादेवापि ह यद्यस्याश्ममूर्धा द्विषन्भवति क्षिप्रं हैवैनं स्तृणुते स्तृणुते २८ ५

इत्यष्टमपञ्चिका समाप्ता शुभं भवतु

<u>Credits</u>

Source: Th. Aufrecht, *Das Aitareya Brāhmaṇa.mit Auszuegen aus dem Commentare von Sāyaṇācārya und anderen Beilagen*, Bonn 1879,

Typescript: Entered and edited by Fco. Javier Martinez Garcia
Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection